श्रीगणेशायनमः॥ हरिः ॐ॥ भद्रंकर्णेभिःशृणुयामदेवाः॥ भद्रंप
श्येमाक्षभिर्यजत्राः॥ स्थिरैरंगैस्तुष्टुवाᳪसस्तनूभिः॥ व्यशेमदेवहितंय
दायुः॥ स्वस्तिनइंद्रोवृद्धश्रवाः॥ स्वस्तिनःपूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योअ
रिष्टनेमिः॥ स्वस्तिनोबृहस्पतिर्दधातु॥ ओंशांतिःशांतिःशांतिः॥ ॐभ
द्रंकर्णेभिःशृणुयामदेवाः॥ भद्रंपश्येमाक्षभिर्यजत्राः॥ स्थिरैरंगैस्तुष्टुवाᳪ
सस्तनूभिः॥ व्यशेमदेवहितंयदायुः॥ स्वस्तिनइंद्रोवृद्धश्रवाः॥ स्वस्तिनः
पूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः॥ स्वस्तिनोबृहस्पतिर्दधा
तु॥ आपमापामपःसर्वाः॥ अस्मादस्मादितोमुतः॥ १॥ अग्निर्वायुश्चसू
र्यश्च॥ सहसंचस्करर्धिया॥ वायश्वोरश्मिपतयः॥ मरीच्यात्मानोअद्रुहः॥

आरण

१

देवी भुवनसूवरीः॥ पुत्रवत्पायमेसुतः॥ महानाम्नी महामानाः॥ महतो महसस्वः॥
देवीःपर्जन्यसूवरीः॥ पुत्रवत्पायमेसुतः॥ २॥ अपाश्रुंहिमुपारक्षः॥ अपाश्रुंहि
मपारघं॥ अपाग्राममपेचावर्ति॥ अपदेवीरितोहित॥ वज्रंदेवीरजीताःश्च॥ भु
वनंदेवसूवरीः॥ आदित्यानदितिंदेवी॥ योनिनोर्ध्वमुदीषत॥ शिवानःशंतमा
भवंतु॥ दिव्याआपओषधयः॥ सुमृडीकासरस्वति॥ मातेव्योमसंदृशि॥ ३॥
अमृतःसुतोषधयोदेवं॥ १॥ स्मृतिःप्रत्यक्षमैतिह्यं॥ अनुमानश्चतुष्टयं॥ ए
तैरादित्यमंडलं॥ सर्वैरेवविधास्यते॥ सूर्योमरीचिमादत्ते॥ सर्वस्माद्भुवना
दधि॥ तस्याःपाकविशेषेण॥ स्मृतंकालविशेषणं॥ नदीवप्रभवात्काचित्॥ अ
क्षय्यात्स्यंदतेयथा॥ १॥ तांनद्योभिसमायंति॥ सोरुःसतीननिवर्तते॥ एवंना

अधिसंवत्सरं विद्यात्। तदेवं लक्षणे॥

नासमुत्थानाः॥ कालाः संवत्सरं श्रिताः॥ अणुशश्च महशश्च॥ सर्वं समवयं त्रितं॥ सतैः सर्वैः समाविष्टः॥ ऊरुः सं न निवर्तते॥ २॥ अणुभिश्च महद्भिश्च॥ समारूढः प्रदृश्यते॥ संवत्सरः प्रत्यक्षेण॥ नाधिसत्वः प्रदृश्यते॥ पटरो विक्लिधः पिंगः॥ एतद्रुद्रुणलक्षणं॥ यत्रैतेदुपदृश्यते॥ सहस्रं तत्र नीयते॥ एकं हि शिरो नानामुखे॥ कृत्स्नं तदृतुलक्षणं॥ ३॥ उभयतः सप्तेन्द्रियाणि॥ जल्पितं त्वेव दिह्यते॥ शुक्लकृष्णे संवत्सरस्य॥ दक्षिणवामयोः पार्श्वयोः॥ तस्यैषा भवति॥ शुक्रं ते अन्यद्यजतं ते अन्यत्॥ विषुरूपे अहनी द्यौरिवासि॥ विश्वा हि माया अवसि स्वधावः॥ भद्रा ते पूषन्निह रातिरस्त्विति॥ नात्र भुवनं॥ ४॥ न पूषा॥ न पशवः॥ नादित्यः संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात्॥ एतद्वै सं

आरण
२

त्सरस्य प्रियतमं स्वरूपं॥ योस्य महानर्थउत्पत्स्यमानो भवति॥ इदं पुण्यं कुरुष्वेति॥ तमाहरणं दद्यात्॥ ५॥ यथा लक्षणं ऋतु लक्षणं भुवनं सप्त च॥ २॥ साकं जानां सप्तथमाहुरेकजं॥ षडुद्यमा ऋषयो देवजा इति॥ तेषामिष्टानि विहितानि धामशः॥ स्थात्रे रेजंते विकृतानि रूपशः॥ को नु मर्या अमिथितः॥ सखा सखायमब्रवीत्॥ जहाको अस्मदीषते॥ यस्तित्याज सखिविदं सखायं॥ न तस्य वाच्य विभागो अस्ति॥ यदीं शृणोत्यलकं शृणोति॥ १॥ नहि प्रवेद सुकृतस्य पंथामिति॥ ऋतुर्ऋतुना नुद्यमानः॥ विननादाभिधावः॥ षष्टिश्च त्रिंशका वल्गाः॥ शुक्लकृष्णौ च षाष्टिकौ॥ सारागवस्त्रैर्जरदक्षः॥ वसंतो वसुभिः सह॥ संवत्सरस्य सवितुः॥ प्रैषकृत्प्रथमः स्मृतः॥ अमूनादयतेत्य

२

२

न्यान् ॥२॥ अमूंश्चपरिरक्षतः ॥ एता वाचः प्रयुज्यंते ॥ यत्रैतदुपदृश्यं
ते ॥ एतदेव विजानीयात् ॥ प्रमाणं कालपर्यये ॥ विशेषणं तु वक्ष्यामः ॥ ऋ
तूनां तं निबोधत ॥ शुक्लवासा रुद्रगणः ॥ ग्रीष्मेणावर्तते सह ॥ निजघ्नन्पृ
थिवीं सर्वां ॥३॥ ज्योतिषां प्रतिरूपेण सः ॥ विश्वरूपाधिवासांसि ॥
आदित्यानां निबोधत ॥ संवत्सरीणं कर्मफलं ॥ वर्षाभिर्ददतां सह ॥ अदुः
खो दुःखचक्षुरिव ॥ तथापीत इव दृश्यंते ॥ शीतेनाव्यथयन्निव ॥ रुरुदक्ष इव दृ
श्यंते ॥ ह्लादयते ज्वलतश्चैव ॥ शाम्यतश्चास्य चक्षुषी ॥ या वै प्रजा भ्रंश्यं
ते ॥ संवत्सरात्ताभ्रंश्यंते ॥ याः प्रतितिष्ठंति ॥ संवत्सरे ताः प्रतितिष्ठंति ॥ व
र्षाभ्य इत्यर्थः ॥४॥ शृणोत्यन्यां सर्वामेव षट्चं ॥३॥ अक्षिदुःखोत्थितस्यै

व॥ विप्रसश्चेकुनीनिके॥ आङ्क्ष्वाक्रणंनाक्ति॥ क्रूंभूणां तं निबोधत॥ कृनु
काभानिवासोऽसि॥ अहंतोनिनिबोधत॥ अलमश्नीत मृज्मीत॥ अहंवो
जीवनप्रदः॥ एता वाचः प्रयुज्यंते॥ शरद्यत्रोपदृश्यते॥१॥ अभिधून्वंतो
भिघ्नंतइव॥ वातवंतो मरुद्गणाः॥ अमुतोजेतुमिषुमुखमिव॥ संनद्धाःस
हददृशेह॥ अपध्वस्तैर्वस्तिवर्णैरिव॥ विशिखासःकपर्दिनः॥ अक्रुद्धस्य
योत्स्यमानस्य॥ क्रुद्धस्येव लोहिनी॥ हेमतश्चक्षुषी विद्यात्॥ अक्ष्णयोः
क्षिपणोरिव॥२॥ दुर्भिक्षंदेवलोकेषु॥ मनूनामुदकंगृहे॥ एतावाचःप्रव
दंतीः॥ वैद्युतोयांतिशैशिरीः॥ ता अग्निःपवमाना अन्वैक्षत॥ इहजीविकाम
परिपश्यन्॥ तस्यैषाभवति॥ इहेहवस्वतपसः॥ मरुतःसूर्यत्वचः॥ शर्म

सुप्रथा आरुणे ॥ ३ ॥ दृश्यते रुद्रवारुणे ॥ ४ ॥ अतितान्नामिवासाऽसि ॥ अष्टिर्वज्जिशु
ताग्निं च ॥ विश्वेदेवा विप्रहर्तिः ॥ आग्निजिह्वा असश्चत ॥ नैवदेवो नमर्त्यः ॥ नराजा
वरुणो विभुः ॥ नाग्निर्नेन्द्रो न पवमानः ॥ मातरं कुं च न विद्यते ॥ दिव्यस्यैका धनुरा
र्त्निः ॥ पृथिव्यामपरा श्रिता ॥ ३ ॥ तस्येन्द्रो वध्रिरूपेण ॥ धनुर्ज्यामछिनत्स्वयं ॥ त
दिन्द्रधनुरित्युज्यं ॥ अभ्रवर्णेषु चक्षते ॥ एतदेव शंयोर्बार्हस्पत्यस्य ॥ एतद्रुद्रस्य ध
नुः ॥ रुद्रस्य त्वेव धनुरार्त्निः ॥ शिर उत्पिपेष ॥ स प्रवर्ग्योऽभवत् ॥ तस्माद्यः सप्रवु
र्ग्येण यज्ञेन यजते ॥ रुद्रस्य स शिरः प्रतिदधाति ॥ नैनं रुद्र आरुको भवति ॥ य एवं
वं वेद ॥ २ ॥ श्रिताय जैतेत्रीणि च ॥ ५ ॥ अत्यूर्ध्वाक्षोऽतिरश्चात् ॥ शिशिरः प्रदृश्यते ॥
नैव रूपं नैवासाऽसि ॥ न चक्षुः प्रतिदृश्यते ॥ अन्योन्यं तु न हिंस्रातः ॥ सतस्तद्देवलक्ष्म

णं॥ लोहितोक्षिण शारशीर्ष्णिः॥ सूर्यस्योदयनंप्रति॥ त्वंकरोषिन्यंजलिकां॥ त्वं
करोषिनिजानुकां॥१॥ निजानुकामेन्यंजलिका॥ अमीवाचमुपासतामिति॥ तस्मै
सर्वेऋतवोनमंते॥ मर्यादाकरत्वात्प्रपुरोधां॥ ब्राह्मणआप्नोति॥ यएवंवेद॥
सखलुसंवत्सरएतैःसेनानीभिःसह॥ इंद्रायसर्वान्कामानभिवहति॥ सद्रप्सः॥
तस्यैषाभवति॥२॥ अवद्रप्सोअंशुमतीमतिष्ठत्॥ इयानःकृष्णोदशभिःस
हस्रैः॥ आवर्तमिंद्रःशच्याधमंतं॥ उपस्नुहितंनृमणामथद्रामिति॥ एतयैवें
द्रःसलावृक्यासह॥ असुरान्परिवृश्चति॥ पृथिव्यंशुमती॥ तामन्ववस्थितः
संवत्सरोदिवंच॥ नैवंविदुषाचार्यांतेवासिनौ॥ अन्योन्यस्मैद्रुह्यातां॥ योद्रुह्य
ति॥ भ्रश्यतेस्वर्गाल्लोकात्॥ इत्यृतुमंडलानि॥ सूर्यमंडलान्याख्यायिकाः॥ अत

उर्ध्वं॒स निर्वु॒चनाः ॥३॥ निज्ञानुको भवतिद्रुह्यातां पंचं च ॥६॥ आरोगो
भ्राजः पटरः पतंगः॥ स्वर्णरो ज्योतिषीमान्विभासः॥ तेअस्मै सर्वे दिवमा
तपंति॥ ऊर्जं दुहाना अनपस्फुरंत इति॥ कश्यपोष्टमः॥ समहामेरुन्नज
हाति॥ तस्यैषाभवति॥ यत्तेशिल्पंकश्यपरोचनावत्॥ इंद्रियावत्पुष्कलं
चित्रभानु॥ यस्मिन्सूर्या अर्पिताः सप्तसाकं॥१॥ तस्मिन्राजानमधिवि
श्रयेममिति॥ तेअस्मै सर्वेकश्यपाज्योतिर्लभंते॥ तान्सोमः कश्यपादधि
निर्धमति॥ भ्रस्ताकर्मकृदिवैवं॥ प्राणो जीवानींद्रियजीवानि॥ सप्तशी
र्षण्याः प्राणाः॥ सूर्याइत्याचार्याः॥ अपश्यमहमेतान्सप्तसूर्यानिति॥
पंचकर्णोवात्स्यायनः॥ सप्तकर्णश्चप्लाक्षिः॥२॥ आनुश्रविकए

आरण
५

वनौकश्यपइति॥ उभौवेदयिते॥ नहिशेकुमिवमहामेरुंगंतुं॥ अपश्यमहमेतत्सू
र्यमंडलंपरिवर्तमानं॥ गार्ग्यःप्राणत्रातः॥ गच्छंतमहामेरुं॥ एकंचाजहतं॥ भ्राजपट
रपतंगानिहने॥ तिष्ठन्नातपंति॥ तस्मादिहतप्त्रितपाः॥ ३॥ अमुत्रेतरे॥ तस्मादिहात
प्त्रितपाः॥ तेषामेषाभवति॥ सप्तसूर्यादिवमनुप्रविष्टाः॥ तानन्वेतिपथिभिर्दक्षिणावा
न्॥ तेअस्मैसर्वेघृतमातपंति॥ ऊर्जंदुहानाअनपस्फुरंतइति॥ सप्तर्त्विजःसूर्याइत्या
चार्याः॥ तेषामेषाभवति॥ सप्तदिशोनानासूर्याः॥ ४॥ सप्तहोतारऋत्विजः॥ देवाआ
दित्यायेसप्त॥ तेभिःसोमाभीरक्षणइति॥ तदप्याम्नायः॥ दिग्भ्राजऋतून्करोति॥
एतयैवावृतासहस्रसूर्यतायाइतिवैशंपायनः॥ तस्यैषाभवति॥ यद्द्यावइंद्रतेशतंॅ
शतंभूमीः॥ उतस्युः॥ नत्वावज्रिन्सहस्रंसूर्याः॥ ५॥ अनुनजातमष्टरोदसी॥

५

ति॥ नानालिंगत्वादृतूनां नानांसूर्यत्वं॥ अष्टौतुव्यवसिताइति॥ सूर्यमंडलान्यष्टौतऊ
र्ध्वं॥ तेषामेषाभवति॥ चित्रंदेवानामुदगादनीकं॥ चक्षुर्मित्रस्यवरुणस्याग्नेः॥ आ
प्राद्यावापृथिवीअंतरिक्षं॥ सूर्यआत्माजगतस्तस्थुषश्चेति॥ ६॥ साकंस्लाक्षिस्तप्ति
तप्तानानांसूर्याः सूर्यानवेच॥ ७॥ क्वेदमभ्रंनिविशते॥ क्वायंसंवत्सरोमिथः॥ क्वा
हः क्वेयंदेवरात्री॥ क्वमासाऋतवःश्रिताः॥ अर्धमासामुहूर्ताः॥ निमेषास्तुटिभिः
सह॥ क्वेमाआपोनिविशंते॥ यदीतोयांतिसंप्रति॥ कालाअप्सुनिविशंते॥ आपः
सूर्येसमाहिताः॥ ९॥ अभ्राण्यपः प्रपद्यंते॥ विद्युत्सूर्येसमाहिता॥ अनवर्णेइ
मेभूमी॥ इयंचासौचरोदसी॥ किंस्विदत्रांतराभूतं॥ येनेमेविधृतेउभे॥ विष्णुना
विधृतेभूमी॥ इतिवत्सस्यवेदना॥ इरावतीधेनुमतीहिभूतं॥ सूयवासिनीमनुषेदश

आरण्य
६

स्ये॥२॥व्यष्टभ्ना रोदसी विष्णुवेते॥ दा धर्थे पृथिवी मभितो मयूखैः॥ किंतद्विष्णो
र्बलमाहुः॥ कादीप्तिः किंपरायणं॥ एको यद्धारयद्देवः॥ रेजती रोदसी उभे॥ वा
ताद्विष्णोर्बलमाहुः॥ अक्षराद्दीप्तिरुच्यते॥ त्रिपदाद्धारयेद्देवः॥ यद्विष्णोरेकमु
त्तमं॥ ३॥ अग्नयो वायवश्चैव॥ एतदस्य परायणं॥ पृच्छामि त्वां परं मृत्युं॥ अवमं
मध्यमं चतुं॥ लोकं च पुण्यपापानां॥ एतत्पृच्छामि संप्रति॥ अमुमाहुः परं मृत्युं
॥ पवमानं तु मध्यमं॥ अग्निरेवावमो मृत्युः॥ चंद्रमाश्चतुरुच्यते॥ ४॥ अनाभो
गाः परं मृत्युं॥ पापाः संयंति सर्वदा॥ आभोगास्त्वेव संयंति॥ यत्र पुण्यकृतो जनाः॥
ततो मध्यममायंति॥ चतुमग्निं च संप्रति॥ पृच्छामि त्वां पापकृतः॥ यत्र यातयते
यमः॥ त्वं नस्तद्ब्रह्मन्प्रब्रूहि॥ यदि वेत्था सतो गृहान्॥ ५ ॥ कश्यपो दुहिताः

६

सूर्यः॥पापान्निर्घ्नंतिसर्वदा॥रोदस्योरंतर्देशेषु॥तत्रन्यस्यंतेवासवैः॥तेशरीराः
ण्यपद्यंते॥यथापुण्यस्यकर्मणः॥अपीण्युपादकेशासः॥तत्रयौतेनिर्जाजनाः॥
मृत्वापुनर्मृत्युमापद्यंते॥अधर्मानाःस्वकर्मभिः॥६॥आग्रातिकाःक्रिमयदुवा॥
ततःपूयंतेवासवैः॥अपैतंमृत्युंजयति॥यएवंवेद॥सखल्वेवंविद्ब्राह्मणः॥दीर्घ
श्रुत्तमोभवति॥कश्यपस्यातिथिःसिद्धगमनःसिद्धागमनः॥तस्यैषाभवति॥आ
यस्मिन्त्सप्तवासवाः॥रोहंतिपूर्व्यारुहः॥७॥ऋषिर्हदीर्घश्रुत्तमः॥इंद्रस्यघर्मोअ
तिथिरिति॥कश्यपःपश्यकोभवति॥यत्सर्वंपरिपश्यतीतिसौक्ष्म्यात्॥अथा
ग्नेरष्टपुरुषस्य॥तस्यैषाभवति॥अग्नेनयसुपथारायेअस्मान्॥विश्वानिदेवव
युनानिविद्वान्॥युयोध्यस्मज्जुहुराणमेनः॥भूयिष्ठांतेनमउक्तिंविधेमेति॥८॥

आरण

समाहितादशस्येउत्तममुच्यतेगृहान्त्स्वकर्मभिः पूर्व्योरुहइति॥७॥ अग्निश्चजात

वेदाश्च॥ सहोजाअजिरप्रभुः॥ वैश्वानरोनर्यापाश्च॥ पङ्क्तिराधाश्चसप्तमः॥ विसर्पे

वाष्टमोग्नीनां॥ एतेष्टौवसवःक्षितारइति॥ यथर्त्वेवाग्नेरर्चिर्वर्णविशेषाः॥ नीला

र्चिश्चपीतकार्चिश्चेति॥ अथवायोरेकादशपुरुषस्यैकादशस्त्रीकस्य॥ प्रभ्राज

मानाव्यवदाताः॥ १॥ याश्चवासुकिवैद्युताः॥ रजताःपरुषाःश्यामाः॥ कपिला

अतिलोहिताः॥ ऊर्ध्वाअवपतंताश्च॥ वैद्युतइत्येकादश॥ नैनंवैद्युतोहिनस्ति॥

यएवंवेद॥ सहोवाचव्यासःपाराशर्यः॥ विद्युद्वधमेवाहंमृत्युमैच्छमिति॥ नत्वका

मंहंति॥ २॥ यएवंवेद॥ अथगंधर्वगणाः॥ स्वानभ्राट्॥ अंघारिर्बंभारिः॥ ह

स्तःसुहस्तः॥ कृशानुर्विश्वावसुः॥ मूर्धन्वान्सूर्यवर्चाः॥ कृतिरित्येकादशगंध

७

र्वृगणाः॥ देवाश्चमहादेवाः॥ रश्मयश्च देवा गरगिरः॥३॥ नैनं गरो हिनस्ति॥ यएवं
वेद॥ गौरीर्मिमाय सलिलानि तक्षती॥ एकपदी द्विपदी सा चतुष्पदी॥ अष्टापदी न
वपदी बभूवुषी॥ सहस्राक्षरा परमे व्योमन्निति॥ वाचो विशेषणं॥ अथ निगदव्या
ख्याताः॥ ताननुक्रमिष्यामः॥ वराहवस्त्वपसः॥४॥ विद्युन्महसो धूपयः॥
श्वापयो गृहमेधाश्चेत्येते॥ ये चेमेऽमि वृद्धिषः॥ पर्जन्याः सप्तपृथिवीमभिव
र्षंति॥ वृष्टिभिरिति॥ एतयैव विभक्ति विपरीताः॥ सप्तभिर्वातैरुदीरिताः॥ अमून्
लोकानभिवर्षंति॥ तेषामेषा भवति॥ समानमेतदुदकं॥५॥ उच्चैत्येव चाहभिः॥ भू
मिं पर्जन्या जिन्वंति॥ दिवं जिन्वंत्यग्नयइति॥ यदक्षरं भूतकृतं॥ विश्वे देवा उपासते॥
महर्षिमस्य गोप्तारं॥ जमदग्निमकुर्वत॥ जमदग्निरा प्यायते॥ छंदोभिश्चतुरुत्त

दे:॥ राज्ञः सोमस्य तृप्तासः॥६॥ ब्रह्मणा वीर्यावता॥ शिवा नः प्रदिशो दिशः॥ तच्छं
योरावृणीमहे॥ गातुं यज्ञाय॥ गातुं यज्ञपतये॥ दैवीः स्वस्तिरस्तु नः॥ स्वस्तिर्मा
नुषेभ्यः॥ ऊर्ध्वं जिगातु भेषजं॥ शन्नो अस्तु द्विपदे॥ शं चतुष्पदे॥ सोमपा ३ असो
मपा ३ इति निगदव्याख्याताः॥७॥ युवा हं विगरागिरस्तपसइदं कं तत्तास
श्चतुष्पद एकं च॥९॥ सहस्रुरदियं भूमिः॥ परं व्योम सहस्रे रत्॥ अश्विना भुज्यू
नासत्या॥ विश्वस्य जगतस्पती॥ जाया भूमिः पतिर्व्योम॥ मिथुनं ता अतुर्यथुः॥ पुत्रो बृ
हस्पती रुद्रः॥ सरमा इति स्त्रीपुमं॥ शुक्रं वामन्यद्यजतं॥ वामन्यत्॥ विषुरूपे अह
नी द्यौरिव स्थः॥३॥ विश्वा हि माया अवथः स्वधावंतौ॥ भद्रा वां पूषणा विह रातिरस्तु॥
वासौत्यो चित्रो जगैजेतो निधानौ॥ द्यावाभूमी चरथः संसरवौ यो॥ तावाश्विनौ रा=

सभोश्वाहवेमे॥ शुभस्पती आगतं सूर्यया सह॥ त्कग्रो ह भुज्युमश्विनोदमेघे॥ र

यिन्नकश्चिन्ममृवां ३ अवाहाः॥ तमूहथुर्नौभिरात्मन्वतीभिः॥ अंतरिक्षप्रुद्भिरपो

दकाभिः॥ २॥ तिस्रः क्षपस्त्रिरहातिव्रजद्भिः॥ नासत्या भुज्युमूहथुः पतंगैः॥ समु

द्रस्य धन्वन्नार्द्रस्य पारे॥ त्रिभी रथैः शतपद्भिः षडश्वैः॥ सवितारं वितन्वंतं॥ अनुब

ध्नाति शांबरः॥ आपपूरुषं बरश्चैव॥ सवितारेपसो भुवत्॥ त्यं सुतृप्तं विदिद्वैव॥

बहुसोमगिरं वशी॥ ३॥ अन्वेति तुग्रो वक्रियां तं॥ आयसूयान्सोमतृप्सु॥ स

स्थो

संग्रामस्तमो द्योतः॥ वाचो गाः पिपाति तत्॥ स तद्गोभिस्तवा त्येत्यन्ये॥ रक्षसा न

न्विताश्चय॥ अन्वेति परिवृत्या सः॥ एवमेतौ स्थो अश्विना॥ ते एते द्युः पृथिव्योः॥

अहरहर्गर्भं दधाथे॥ ४॥ तयोरेतौ वत्सावहोरात्रे॥ पृथिव्या अहः॥ दिवो रात्रिः॥

आरण
९

तावविसृष्टौ॥ दंपती एवम्भवतः॥ तयोरेतौ वत्सौ॥ अग्निश्चादित्यश्च॥ रात्रे र्वत्सः॥ श्वेत आदित्यः॥ अह्नोग्निः॥ ५॥ ताम्रो अरुणः॥ अभ्रं विद्युच्च तावविसृष्टौ॥ दंपती एवम्भवतः॥ तयोरेतौ वत्सौ॥ वृत्रश्च वैद्युतश्च॥ अभ्रे वृत्रः॥ वैद्युतं आदित्यस्य॥ तावविसृष्टौ॥ दंपती एवम्भवतः॥ तयोरेतौ वत्सौ॥ उष्मा चैनीहारश्च॥ वृत्रस्योष्मा॥ वैद्युतस्य नीहारः॥ तौ ताचेव प्रतिपद्येते॥ सेयं रात्री गर्भिणी पुत्रेण संवसति॥ तस्या वा एतदुल्बणं॥ यद्रात्रौ रश्मयः॥ यथा गोर्गर्भिण्या उल्बणं॥ एवमेतस्या उल्बणं॥ प्रजायिष्णुः प्रजया च पशुभिश्च भवति॥ य एवं वेद॥ एतमुद्यन्तमपि यन्तं चेति॥ आदित्यः पुण्यस्य वत्सः अथ पवित्राङ्गिरसः॥ ७॥ स्त्रो पोदकाभिर्वर्षीदधाथे अग्निस्तयोरेतौ वत्सौ ९

→॥६॥

भुवनिचत्वारि च ॥ १० ॥ पवित्रवंतः परिवाचमासते ॥ पितैषां प्रत्नो अभि रक्षति व्रतं ॥ महः समुद्रं वरुणस्तिरोदधे ॥ धीरा इच्छेकुर्धरुणेष्वारभं ॥ पवित्रंते विततं ब्रह्मणस्पते ॥ प्रभुर्गात्राणि पर्येषि विश्वतः ॥ अतप्ततनूर्नतदामो अश्नुते ॥ शृतास इद्वहंतस्तत्समाशत ॥ ब्रह्मा देवानां ॥ असतः सद्ये ततक्षुः ॥ १ ॥ ऋषयः सप्तात्रिश्च यत् ॥ सर्वे त्रयो अगस्त्यश्च ॥ नक्षत्रैः शंकृतोवसन् ॥ अथ सवितुः श्यावाश्वस्या वर्तिकामस्य ॥ अमी य ऋक्षा निहितास उच्चा ॥ नक्तं ददृश्रे कुहचिद्दिवेयुः ॥ अदब्धानि वरुणस्य व्रतानि ॥ विचाकशच्चंद्रमा नक्षत्रमेति ॥ तत्सवितुर्वरेण्यं ॥ भर्गो देवस्य धीमहि ॥ २ ॥ धियो यो नः प्रचोदयात् ॥ तत्सवितुर्वृणीमहे ॥ वयं देवस्य भोजनं ॥ श्रेष्ठं सर्वधातमं ॥ तुरं भगस्य धीमहि ॥

आरण
१०

अपागूहत सविता तृभीन्॥ सर्वान्दिवो अंधसः॥ नक्तं तान्यभवं दृशे॥ अस्थ्यस्थ्ना सं
भविष्यामः॥ नामनामैव नाम मे॥ ३॥ नपुंसकं पुमांस्त्र्यस्मि॥ स्थावरोस्म्यथ जं
गमः॥ यजेयक्षियष्टाहे च॥ मया भूतान्ययक्षत॥ पशवो मम भूतानि॥ अनूबंध्यो
स्म्यहं विभुः॥ स्त्रियः सतीः॥ ता उ मे पुंस आहुः॥ पश्यदक्षण्वान्न विचेतदंधः॥
कविर्यः पुत्रः स इमा चिकेत॥ ४॥ यस्ता विजानात्स पितुः पितासत्॥ अंधो मणिम
विंदत्॥ तमनंगुलिरावयत्॥ अग्रीवः प्रत्यमुंचत्॥ तमजिह्वा असश्चत॥ ऊर्ध्व
मूलमवाक्छाखं॥ वृक्षं यो वेद संप्रति॥ न स जातु जनः श्रद्दध्यात्॥ मृत्युर्मा मारया
दिति॥ हसितं रुदितं गीतं॥ ५॥ वीणापणवलासितं॥ मृतं जीवं च यत्किंचित्॥
अंगानि स्नेव विद्धि तत्॥ अतृष्यंस्तृष्यध्यायत्॥ अस्माज्जाता मे मिथू चरन्॥
पुत्रो निरृत्या वैदेहः॥ अचेता यश्च चेतनः॥ स तं मणिमविंदत्॥ सोनंगुलिरा

१०

॥६॥

वयतु॥ ॥ सो ग्रीवः प्रत्यमुंचत्॥ सो जिह्मो असश्चत॥ नैनमृषिं विदित्वा न
गरं प्रविशेत्॥ यदि प्रविशेत्॥ मिथोचरित्वा प्रविशेत्॥ तत्संभवस्य व्रतं॥
आतमग्ने रथं तिष्ठ॥ एकाश्वमेकयोजनं॥ एकचक्रमेकधुरं॥ वात ध्राजि
गतिं विभो॥ न रिष्यति न व्यथते॥ नास्याक्षो यातु सज्जति॥ यच्छ्वेतान्रोहिता
ंश्चाग्ने॥ रथे युक्त्वाधितिष्ठति॥ एकया च दशभिश्च स्वभूते॥ द्वाभ्यामि
ष्टये विंशत्या च॥ तिसृभिश्च वहसे त्रिंशता च॥ नियुद्भिर्वायविह ता विमुं
च॥ ७॥ तत्क्षधीमहि नाममे चिकेत गीतं प्रत्यमुंच ध्रुथते सूत्तचं॥ ११॥ आ
तेनुष्व प्रतंनुष्व॥ उद्धमा धम संधम॥ आदित्ये चंद्रवर्णानां॥ गर्भमाधेहि यः पु
मान्॥ इतः सिक्तं सूर्यगतं॥ चंद्रमसे रसं कृधि॥ वारादं जनयाग्रे अग्निं॥ यएको

आरण
३१

रुद्र उच्यंते ॥ असंख्याताः सहस्राणि ॥ स्मर्यते न च दृश्यते ॥ ३ ॥ एवमेतं
निबोधत ॥ आमंद्रैरिंद्र हरिभिः ॥ याहि मयूररोमभिः ॥ मा त्वा के चिन्येमुरि
न्न पाशिनः ॥ दधन्वेव ता इहि ॥ मा मंद्रैरिंद्र हरिभिः ॥ याहि मयूररोमभिः ॥ याहि
मामा के चिन्ये मुरिन्न पाशिनः ॥ निधन्वेव तां३ इमि ॥ अणुभिश्च महद्भिश्च ॥ २ ॥
निघृष्वैरसमायुतैः ॥ कालैर्हरित्वमापन्नैः ॥ इंद्रायाहि सहस्रयुक् ॥ अग्नि
र्विभ्राष्टिवसनः ॥ वायुश्वेतसिकद्रुकः ॥ संवत्सरो विषूवर्णैः ॥ नित्यास्तेनुच
रास्तव ॥ सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों ॥ इंद्रागच्छ हरिव आ
गच्छ मेधातिथेः ॥ मेषवृषणश्चस्यमेने ॥ ३ ॥ गौरावस्कंदिन्नहल्यायैजा
र ॥ कौशिक ब्राह्मण गोतम ब्रुवाण ॥ अरुणा श्वाइहागताः ॥ वसवः पृ

३१

थिव्रिक्षितः॥ अष्टौ दिग्वाससोमयः॥ अग्निश्च जातवेदाश्चेत्युते॥ ताम्राश्वा
स्ताम्ररथाः॥ ताम्रवर्णास्तथासिताः॥ दंडहस्ताः खादृग्दतः॥ इतो रुद्राः परां
गताः॥ ४॥ उत्तरं स्थानं प्रमाणं च पुरक्षित॥ बृहस्पतिश्च सविता च॥ विश्वरूपै
रिहागतां॥ रथेनोदकवर्त्मना॥ अक्षषोडशिनइयोः॥ उक्तो वेषी वासांसि
च॥ कात्त्रावयवा नामितः प्रतीच्या॥ धासात्योइत्यश्विनौ॥ कोंतरिक्षे शब्दं
करोतीति॥ वासिष्ठो रौहिणो मीमांसां चक्रे॥ तस्यैषा भवति॥ वाश्रेव वि
द्युदिति॥ ब्रह्मणउदरणमसि॥ ब्रह्मण आस्तरणमसि॥ ब्रह्मणउपस्तर
णमसि॥ ५॥ इत्ययं तेच मनेपरां गताश्चक्रे षट् च॥ अष्टयोनीमष्टपुत्रां॥ अ

× ब्रह्मणउदीरणमसि॥ ×

(अपक्रामत गर्भिण्यः॥)

आरण
१२

अष्टपत्नीमिमां महीं॥ अहं वेद न मे मृत्युः॥ न चामृत्युरघाहरत्॥ अष्टयोन्यष्टपत्नीं
पुत्रं॥ अष्टपदिदमंतरिक्षं॥ अहं वेद न मे मृत्युः॥ न चामृत्युरघाहरत्॥ अष्टयो
नीमष्टपुत्रां॥ अष्टपत्नीममूं दिवं॥१॥ अहं वेद न मे मृत्युः॥ न चामृत्युरघा
हरत्॥ सुत्रामाणं महीमूषु॥ अदितिर्द्यौरदितिरंतरिक्षं॥ अदितिर्माता स
पिता स पुत्रः॥ विश्वे देवा अदितिः पंच जनाः॥ अदितिर्जातमदितिर्जनित्वं॥ ति
अष्टौ पुत्रासो अदितेः॥ ये जातास्तन्वः परि॥ देवां उपप्रैत्सप्तभिः॥२॥ प
रा मार्तांडमास्यत्॥ सप्तभिः पुत्रैरदितिः॥ उपप्रैत्पूर्व्यं युगं॥ प्रजायै मृत्यवे
तत्॥ परा मार्तांडमाभरदिति॥ तानुक्रमिष्यामः॥ मित्रश्च वरुणश्च॥ १२
धाता चार्यमा च॥ अंशश्च भगश्च॥ इंद्रश्च विवस्वांश्चेत्येते॥ हिर

ण्य गर्भो हूंसः शुचिषत्॥ ब्रह्म जज्ञानं तदित्य दमिति॥ गर्भः प्राजापत्यः॥ अथ
पुरुषः सप्त पुरुषः॥३॥ अमूं दिंसप्तभिरेते चत्वारि च॥१३॥ यो सौ तपन्नुदेति
॥ स सर्वेषां भूतानां प्राणानादायोदेति॥ मा मे प्रजाया मा पशूनां॥ मा मम प्राणा
नादायोदगाः॥ असौ यो स्तमेति॥ स सर्वेषां भूतानां प्राणानादायास्तमेति॥ मा
मे प्रजाया मा पशूनां॥ मा मम प्राणानादायास्तंगाः॥ असौ य आपूर्यति॥ स स
र्वेषां भूतानां प्राणैरापूर्यति॥३॥ मा मे प्रजाया मा पशूनां॥ मा मम प्राणैरापूरि
ष्ठाः॥ असौ यो पक्षीयति॥ स सर्वेषां भूतानां प्राणैरपक्षीयति॥ मा मे प्रजाया मा
पशूनां॥ मा मम प्राणैरपक्षेष्ठाः॥ अमूनि नक्षत्राणि॥ सर्वेषां भूतानां प्राणैरपत्र
सर्पन्ति चोत्सर्पन्ति च॥ मा मे प्रजाया मा पशूनां॥ मा मम प्राणैरपत्र सृपत मोत्सृपत॥२॥

आरण
१२

इमं मासं वार्धमासाश्च॥ सर्वेषां भूतानां प्राणेरपप्रसर्पति चोत्सर्पति च॥ मा
मे प्रजाया मा पशूनां॥ मा मम प्राणोऽपप्रसृपत मोत्सृपत॥ इम ऋतवः॥ सर्वेषां
भूतानां प्राणेरपप्रसर्पति चोत्सर्पति च॥ मा मे प्रजाया मा पशूनां॥ मा मम प्रा
णोरपप्रसृपत मोत्सृपत॥ अयं संवत्सरः॥ सर्वेषां भूतानां प्राणेरपप्रसर्पति चो
त्सर्पति च॥३॥ मा मे प्रजाया मा पशूनां॥ मा मम प्राणोरपप्रसृप मोत्सृप॥
इदमहः॥ सर्वेषां भूतानां प्राणेरपप्रसर्पति चोत्सर्पति च॥ मा मे प्रजाया मा प
शूनां॥ मा मम प्राणोरपप्रसृप मोत्सृप॥ इयं रात्रिः॥ सर्वेषां भूतानां प्राणेरप
प्रसर्पति चोत्सर्पति च॥ मा मे प्रजाया मा पशूनां॥ मा मम प्राणोरपप्रसृप मो
त्सृप॥ ॐ भूर्भुवस्वः॥ एतद्वै मे नो मा नो मिथुनं रिदुं॥४॥ प्राणेरापूर्यति मो

१२

थु

स्य पल चो त्संपतिचु मो त्स पद्देच ॥ १४ ॥ उदेत्यस्त मेत्या पूर्यत्यप क्षीयत्यमू
निन क्षेत्राणी मे मासा ऋत वो यं संवत्सर दमहं रियं रात्रि र्दश ॥ अ
थादित्यस्या ष्टपुरुषस्य ॥ वसूनामादित्यानां स्थाने स्वतेजसाभानि ॥
रुद्राणामादित्यानां स्थाने स्वतेजसाभानि ॥ आदित्यानामादित्यानां
स्थाने स्वतेजसाभानि ॥ सतां सत्यानां ॥ आदित्यानां स्थाने स्वतेजसा
भानि ॥ अभिधून्वतामभिघ्नतां ॥ वातवंतां मरुतां ॥ आदित्यानां स्थाने स्वतेज
साभानि ॥ ऋभूणामादित्यानां स्थाने स्वतेजसाभानि ॥ १ ॥ विश्वेषां देवानां ॥ आ
दित्यानां स्थाने स्वतेजसाभानि ॥ संवत्सरस्य सवितुः ॥ आदित्यस्य स्थाने स्वतेजसाभा

आरण
२५

ग्नि॥ ॐ भूर्भुवस्वः॥ रश्मयो वो मिथुनं मा नो मिथुनं रीढ्वं॥ ऋभूणामादित्या
नां स्थाने स्वतेजसा भानि षट् च॥१५॥ आरोगस्य स्थाने स्वतेजसा भानि॥ भ्रा
जस्य स्थाने स्वतेजसा भानि॥ पटरस्य स्थाने स्वतेजसा भानि॥ पतंगस्य स्थाने स्व
तेजसा भानि॥ विभासस्य स्थाने स्वतेजसा भानि॥ कश्यपस्य स्थाने स्वतेजसा
भानि॥ ॐ भूर्भुवस्वः॥ आपो वो मिथुनं मा नो मिथुनं रीढ्वं॥१॥ आरोगस्य दश
॥१६॥ अथवा योरेकादशापुरुषस्यैकादशस्त्रीकस्य॥ प्रभ्राजमानानां रुद्रा
णां स्थाने स्वतेजसा भानि॥ व्यवदातानां रुद्राणां स्थाने स्वतेजसा भानि॥
वासुकिवैद्युतानां रुद्राणां स्थाने स्वतेजसा भानि॥ रजतानां रुद्राणां स्था
ने स्वतेजसा भानि॥ परुषाणां रुद्राणां स्थाने स्वतेजसा भानि॥ श्यामानां
रुद्राणां स्थाने स्वतेजसा भानि॥ कपिलानां रुद्राणां स्वतेजसा भानि॥
स्थाने

२५

अतिलोहितानाꣳरुद्राणाꣳस्थानेस्वतेजसाभानि॥ऊर्ध्वानाꣳरुद्राणाꣳस्थाने
स्वतेजसाभानि॥३॥अवपतंतानाꣳरुद्राणाꣳस्थानेस्वतेजसाभानि॥वैद्युता
नाꣳरुद्राणाꣳस्थानेस्वतेजसाभानि॥प्रभ्राजमानीनाꣳरुद्राणीनाꣳस्था
नेस्वतेजसाभानि॥व्यवदातीनाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥वा
स्ककिवैद्युतीनाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥रजतानाꣳरुद्राणीनाꣳ
स्थानेस्वतेजसाभानि॥परुषाणाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥श्या
मानाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥कपिलानाꣳरुद्राणीनाꣳस्था
नेस्वतेजसाभानि॥अतिलोहितीनाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥
ऊर्ध्वानाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥अवपतंतीनाꣳरुद्राणीनाꣳ

आरण्य
१५

स्थानेस्वतेजसाभानि॥वैधृतीनाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानि॥ॐभू
र्भुवस्स्वः॥रूपाणिवोमिथुनंमानोमिथुनꣳरीढ्वं॥२॥ऊर्ध्वानाꣳरुद्राणाꣳस्था
नेस्वतेजसाभान्यतिक्रोहितीनाꣳरुद्राणीनाꣳस्थानेस्वतेजसाभानिपंचच॥१७॥
अथाग्नेरष्टपुरुषस्य॥अग्नेःपूर्वदिश्यस्यस्थानेस्वतेजसाभानि॥जातवेदसउ
पदिश्यस्यस्थानेस्वतेजसाभानि॥सहोजसोदक्षिणदिश्यस्यस्थानेस्वतेजसाभा
नि॥अजिराप्रभवउपदिश्यस्यस्थानेस्वतेजसाभानि॥वैश्वानरस्यापरदिश्य
स्यस्थानेस्वतेजसाभानि॥नर्यापसउपदिश्यस्यस्थानेस्वतेजसाभानि॥प
ङ्क्तिराधसउदग्दिश्यस्यस्थानेस्वतेजसाभानि॥विसर्पिणउपदिश्यस्यस्था
नेस्वतेजसाभानि॥ॐभूर्भुवःस्वः॥दिशोवोमिथुनंमानोमिथुनꣳरीढ्वं॥३॥

१५

स्वरे कं च ॥१८॥ दक्षिणपूर्वस्यां दिशि विसर्पी नरकः ॥ तस्मान्नः परिपाहि ॥ द
क्षिणापरस्यां दिश्यविसर्पी नरकः ॥ तस्मान्नः परिपाहि ॥ उत्तरपूर्वस्यां दिशि
विषादी नरकः ॥ तस्मान्नः परिपाहि ॥ उत्तरापरस्यां दिश्यविषादी नरकः ॥ त
स्मान्नः परिपाहि ॥ आ यस्मिन्त्सप्त वासवा इंद्रियाणि शतक्रतविर्त्येते ॥१॥
दक्षिणपूर्वस्यां नव ॥१९॥ इंद्र घोषा वो वसुभिः पुरस्तादुपदधतां ॥ मनोजव
सो वः पितृभिर्दक्षिणत उपदधतां ॥ प्रचेता वो रुद्रैः पश्चादुपदधतां ॥ विश्वक
र्मा व आदित्यैरुत्तरत उपदधतां ॥ त्वष्टा वो रूपैरुपरिष्टादुपदधतां ॥ संज्ञानं वः प
श्चादिति ॥ आदित्यः सर्वोग्निः पृथिव्यां ॥ वायुरंतरिक्षे ॥ सूर्यो दिवि ॥ चंद्रमा दिक्षु ॥
नक्षत्राणि स्वलोके ॥ एवा ह्येव ॥ एवा ह्यग्ने ॥ एवा हि वायो ॥ एवा हींद्र ॥ एवा हि पू

षन्॥ एवा देहि वाः॥१॥ दृक्षु सुत्त च॥२०॥ आपमापामपः सर्वाः॥ अस्माद् स्मादि
तो मुतः॥ अग्निर्वायुश्च सूर्यश्च॥ सहसंचस्कर धियया॥ वाय्वश्वा रश्मिपतयः॥
मर्च्यां रीत्सा नो अर्हतः॥ देवीर्भुवनसूर्वरीः॥ पुत्रवत्वाय मे सुत॥ महानाम्नीर्म
हामानाः॥ महसो महसस्वः॥३॥ देवीः पर्जन्यसूर्वरीः॥ पुत्रवत्वाय मे सुत॥ अपा
श्नुष्णिमपारक्षः॥ अपाश्नुष्णिमपारघं॥ अपाघ्रामप चावर्तिं॥ अपदेवीरितो
हित॥ वज्रं देवीरजीतांश्च॥ भुवनं देवसूवरीः॥ आदित्यानदितिं देवीं॥ योनिनोर्ध्व
मुदीषत॥२॥ भद्रं कर्णेभिः शृणुयाम देवाः॥ भद्रं पश्येमाक्षभिर्यजत्राः॥ स्थिरै
रंगैस्तुष्टुवांसस्तनूभिः॥ व्यशेम देवहितं यदायुः॥ स्वस्ति न इन्द्रो वृद्धश्रवाः॥ १६
स्वस्ति नः पूषा विश्ववेदाः॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः॥ स्वस्ति नो बृहस्पतिर्द

धातु॥ केतवो अरुणासश्च॥ ऋषयो वातरशनाः॥ प्रतिष्ठाᳪं शतधा हि॥ स
माहितासो सहस्रधायसं॥ शिवा नः शंतमा भवंतु॥ दिव्या आप ओषधयः॥
सुमृडीका सरस्वति॥ मा ते व्योम संदृशि॥ ३॥ स्वरुदीर्यत वातरशनाः षड्॥
॥२९॥ योपां पुष्पं वेद॥ पुष्पवान्प्रजावान्पशुमान्भवति॥ य एवं वेद॥ योपा
मायतनं वेद॥ आयतनवान्भवति॥ अग्निर्वा अपामायतनं॥ आयतनवा
न्भवति॥ योग्नेरायतनं वेद॥१॥ आयतनवान्भवति॥ आपो वा अग्नेरायत
नं॥ आयतनवान्भवति॥ य एवं वेद॥ योपामायतनं वेद॥ आयतनवान्भ
वति॥ वायुर्वा अपामायतनं॥ आयतनवान्भवति॥ यो वायोरायतनं वेद॥ आ
चंद्रमा वा अपां पुष्पं॥ पुष्पवान्प्रजावान्प्रजावान्पशुमान्भवति॥ ५

आरण
१७

यतनवान्भवति ॥२॥ आपोवैवायोरायतनं ॥ आयतनवान्भवति ॥ यएवंवे
द ॥ योपामायतनंवेद ॥ आयतनवान्भवति ॥ असौवैतपन्नपामायतनं
॥ आयतनवान्भवति ॥ योमुष्यतपत आयतनंवेद ॥ आयतनवान्भवति ॥
आपोवाअमुष्यतपत आयतनं ॥३॥ आयतनवान्भवति ॥ यएवंवेद ॥ यो
पामायतनंवेद ॥ आयतनवान्भवति ॥ चंद्रमावाअपामायतनं ॥ आयत
नवान्भवति ॥ यश्चंद्रमस आयतनंवेद ॥ आयतनवान्भवति ॥ आपोवैचंद्रमस
आयतनं ॥ आयतनवान्भवति ॥४॥ यएवंवेद ॥ योपामायतनंवेद ॥ आय
तनवान्भवति ॥ नक्षत्राणिवाअपामायतनं ॥ आयतनवान्भवति ॥ योन
क्षत्राणामायतनंवेद ॥ आयतनवान्भवति ॥ आपोवैनक्षत्राणामायतनं

१८

नं ॥ आयतनवान्भवति ॥ यएवंवेद ॥ ५ ॥ योपामायतनंवेद ॥ आयतनवान्भ
वति ॥ पर्जन्योवा अपामायतनं ॥ आयतनवान्भवति ॥ यःपर्जन्यस्यायतनं
वेद ॥ आयतनवान्भवति ॥ आपोवैपर्जन्यस्यायतनं ॥ आयतनवान्भवति ॥
यएवंवेद ॥ योपामायतनंवेद ॥ ६ ॥ आयतनवान्भवति ॥ संवत्सरोवा अपा
मायतनं ॥ आयतनवान्भवति ॥ यःसंवत्सरस्यायतनंवेद ॥ आयतनवान्भ
वति ॥ आपोवैसंवत्सरस्यायतनं ॥ आयतनवान्भवति ॥ यएवंवेद ॥ योप्सु
नावंप्रतिष्ठितांवेद ॥ प्रत्येवतिष्ठति ॥ ७ ॥ इमेवैलोका अप्सुप्रतिष्ठिताः ॥ तदे
षाभ्यनूक्ता ॥ अपाꣳरसमुदयꣳसन् ॥ सूर्येशुक्रꣳसमाभृतं ॥ अपाꣳरस
स्ययोरसः ॥ तंवोगृह्णाम्युत्तममिति ॥ इमेवैलोका अपाꣳरसः ॥ तेमु

।श्विं आदित्ये समाभृताः ॥ जानुदघ्नीमुत्तरवेदीं खात्वा ॥ अपां पूरयित्वा गु
ल्फदघ्नं ॥ ८ ॥ पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च संस्तीर्य ॥ तस्मिन्वि
हायसे ॥ अग्निं प्रणीयोपसमाधाय ॥ ब्रह्मवादिनो वदन्ति ॥ कस्मात्प्रणी
तेयमग्निश्चीयते ॥ साप्रणीतेयमप्स्वेव चीयते ॥ असौ भुवनेप्यनाहि
ताग्निरेताः ॥ तमभितएता अभीष्टका उपदधाति ॥ अग्निहोत्रे दर्शपूर्णमा
सयोः ॥ पशुबन्धे चातुर्मास्येषु ॥ ९ ॥ अथो आहुः ॥ सर्वेषु यज्ञक्रतुष्विति
॥ एतद्ध स्म वा आहुः शण्डिलाः ॥ कमग्निं चिनुते ॥ सत्रियमग्निं चिन्वानः ॥
संवत्सरं प्रत्यक्षेण ॥ कमग्निं चिनुते ॥ सावित्रमग्निं चिन्वानः ॥ अमुमादि
त्यं प्रत्यक्षेण ॥ कमग्निं चिनुते ॥ १० ॥ नाचिकेतमग्निं चिन्वानः ॥ प्राणान्प्र

त्यक्षेण॥ कमग्निं चिनुते॥ चातुर्होत्रियमग्निं चिन्वानः॥ ब्रह्म प्रत्यक्षेण॥ कम
ग्निं चिनुते॥ वैश्वसृजमग्निं चिन्वानः॥ शरीरं प्रत्यक्षेण॥ कमग्निं चिनुते॥ उ
पानुवाक्यामाशुमग्निं चिन्वानः॥ ११॥ इमान्लोकान्प्रत्यक्षेण॥ कमग्निं चि
नुते॥ इममारुणकेतुकमग्निं चिन्वान इति॥ य एवासौ॥ इतश्चामुतश्चाव्य
तीपाती। तमिति॥ योऽग्नेर्मिथूया वेद॥ मिथुनवान्भवति॥ आपो वा अग्नेर्मिथू
याः॥ मिथुनवान्भवति॥ य एवं वेद॥ १२॥ वेद भवत्यायतनमायतनवान्भ
वति वेदुवेदं तिष्ठति गुल्फदघ्नं चातुर्मास्येषु मुमादित्यं प्रत्यक्षेणा कमग्निं
चिनुत उपानुवाक्यमाशुमाग्निं चिन्वानो मिथूया मिथुनवान्भवत्येकं
च॥ २२॥ पुष्पमग्निर्वायुरसौ वै तपन्न्व्रंइमानक्षत्राणि पर्जन्यः संवत्स

रिच्छति सत्रियꣳ संवत्सरꣳ सावित्रमुत्तमं नाचिकेतꣳ प्राणाꣳश्चानु
होत्रियं ब्रह्मणे वैश्वसृजꣳ शरीरमुपानुवाक्यमिमाꣳल्लोकानि
ममारुणकेतुकं य एवासौ ॥ ॥ आपो वा इदमासन्त्सलिलमेव ॥
स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः सम
वर्तत ॥ इदꣳ सृजेयमिति ॥ तस्माद्यत्पुरुषो मनसाभिगच्छति ॥ तद्वा
चा वदति ॥ तत्कर्मणा करोति ॥ तदेषाभ्यनूक्ता ॥ कामस्तदग्रे सम
वर्तताधि ॥ मनसो रेतः प्रथमं यदासीत् ॥ ३ ॥ सतो बन्धुमसति निर
विन्दन् ॥ हृदि प्रतीष्या कवयो मनीषेति ॥ उपैनं तदुपनमति ॥ यत्का
मो भवति ॥ य एवं वेद ॥ स तपोऽतप्यत ॥ स तपस्तप्त्वा ॥ शरीरमधूनुत ॥

तस्युपन्मा ऽ समासीत् ॥ ततोरुणाः केतवो वातरशना ऋषयउदतिष्ठन् ॥ २ ॥ येनखाः
॥ तेवैखानसाः ॥ येवालाः ॥ तेवालखिल्याः ॥ योरसः ॥ सोपः ॥ अंतरतः कूर्मं भूतं
सर्पंतं ॥ तमब्रवीत् ॥ ममवैत्वङ्मांसा ॥ समभूत् ॥ ३ ॥ नेत्यब्रवीत् ॥ पूर्वमेवाह
मिहासमिति ॥ तत्पुरुषस्यपुरुषत्वं ॥ ससहस्रशीर्षा पुरुषः ॥ सहस्राक्षः सह
स्रपात् ॥ भूत्वोदतिष्ठत् ॥ तमब्रवीत् ॥ त्वंवैपूर्वं ऽ समभूः ॥ त्वमिदंपूर्वः कुरुष्वे
ति ॥ सइत आदायापः ॥ ४ ॥ अंजलिना पुरस्तादुपादधात् ॥ एवाह्येवेति ॥ ततआ
दित्यउदतिष्ठत् ॥ साप्राचीदिक् ॥ अथारुणः केतुर्दक्षिणतउपादधात् ॥ एवाह्य
ग्नइति ॥ ततोवा अग्निरुदतिष्ठत् ॥ सादक्षिणा दिक् ॥ अथारुणः केतुः पश्चादु
पादधात् ॥ एवाहिवायोइति ॥ ५ ॥ ततोवायुरुदतिष्ठत् ॥ साप्रतीचीदिक् ॥ अथा

आरण
२०

रुणः केतुरुत्तरत उपादधात् ॥ एवाहीन्द्रेति ॥ ततो इन्द्र उदतिष्ठत् ॥ सोदीची दिक् ॥ अ
थारुणः केतुर्मध्यत उपादधात् ॥ एवाहि पूषन्निति ॥ ततो वै पूषोदतिष्ठत् ॥ सेयं दिक् ॥
॥ ६ ॥ अथारुणः केतुरुपरिष्टादुपादधात् ॥ एवाहि देवा इति ॥ ततो देवमनुष्याः पि
तरः ॥ गंधर्वाप्सरसश्चोदतिष्ठन् ॥ सोर्ध्वा दिक् ॥ या विप्रुषो विपरापतन् ॥ ताभ्यो सु
रा रक्षांसि पिशाचाश्चोदतिष्ठन् ॥ तस्मात्ते पराभवन् ॥ विप्रुड्भ्यो हि ते समभवन् ॥
तदेषाभ्यनूक्ता ॥ ७ ॥ आपो ह यद्बृहतीर्गर्भमायन् ॥ दक्षं दधाना जनयन्तीः स्वयं
भुं ॥ तत इमे अध्यसृज्यन्त सर्गाः ॥ अद्भ्यो वा इदं समभूत् ॥ तस्मादिदं सर्वं ब्रह्म
स्वयंभ्विति ॥ तस्मादिदं सर्वं शिथिलमिवाध्रुवमिवाभवत् ॥ प्रजापतिर्वाव
तत् ॥ आत्मनात्मानं विधाय ॥ तदेवानुप्राविशत् ॥ तदेषाभ्यनूक्ता ॥ ८ ॥ विधा

दक्षं

२०

यल्लोकान्विधाय भूतानि ॥ विधाय सर्वाः प्रदिशो दिशश्च ॥ प्रजापतिः प्रथमजा
ऋतस्य ॥ आत्मनात्मानमभि संविवेशेति ॥ सर्वमेवेदमाप्त्वा ॥ सर्वमवरुध्य ॥
तदेवानुप्रविशति ॥ य एवं वेद ॥ ९ ॥ आसीदतिष्ठन्नभूदथो वायोरिति सेयं दिग्
भ्यन्नूक्ताभ्यनूक्ताष्टौ च ॥ २३ ॥ चतुष्टय्य आपो गृह्णाति ॥ चत्वारि वा अपां
रूपाणि ॥ मेघो विद्युत् ॥ स्तनयित्नुर्वृष्टिः ॥ तान्येवावरुन्धे ॥ आतपति वर्ष्या
गृह्णाति ॥ ताः पुरस्तादुपदधाति ॥ एता वै ब्रह्मवर्चस्या आपः ॥ मुखत ए
व ब्रह्मवर्चसमवरुन्धे ॥ तस्मान्मुखतो ब्रह्मवर्चसितरः ॥ १ ॥ कूप्या गृह्णाति
॥ ता दक्षिणत उपदधाति ॥ एता वै तेजस्विनीरापः ॥ तेज एवास्य दक्षिणतो
दधाति ॥ तस्माद्दक्षिणोऽर्धस्तेजस्वितरः ॥ स्थावरा गृह्णाति ॥ ताः पश्चादुपद

धाति ॥ प्रतिष्ठिता वै स्थावराः ॥ पश्चादेव प्रतितिष्ठति ॥ वहंती गृण्हाति ॥ २ ॥
ता उत्तरत उपदधाति ॥ ओजसा वा एता वहंती ॥ इवोदकं तीरिव आकूजंतीरि
व धावंतीः ॥ ओज एवास्या उत्तरतो दधाति ॥ तस्मादुत्तरोर्ध ओजस्वितरः ॥
संभार्या गृण्हाति ॥ ता मध्य उपदधाति ॥ इयं वै संभार्याः ॥ अस्यामेव प्रतिति
ष्ठति ॥ पल्वल्या गृण्हाति ॥ ता उपरिष्टादुपादधाति ॥ ३ ॥ असौ वै पल्वल्याः
॥ अमुष्यामेव प्रतितिष्ठति ॥ दिक्षूपदधाति ॥ दिक्षु वा आपः ॥ अन्नं वा आपः
॥ अद्भ्यो वा अन्नं जायते ॥ यदेवाद्भ्योऽन्नं जायते ॥ तदवरुंधे ॥ तं वा एतमरु
णाः केतवो वातरशनाः ऋषयोऽचिन्वन् ॥ तस्मादारुणकेतुकः ॥ ४ ॥ तदे
षाभ्यनूक्ता ॥ केतवो अरुणासश्च ॥ ऋषयो वातरशनाः ॥ प्रतिष्ठां शतधा

हि॥ समाहितासोसहस्रधायसमिति॥ शतशः श्रेव सहस्रशश्च प्रतितिष्ठति॥ यएतमग्निंचिनुते॥ यउचैनमेवंवेद॥५॥ ब्रह्मवर्चसितरोयहंती गृण्हातितातउपरिष्टाद्रुपादधात्यारुणकेलुकाष्ठोच॥२४॥ जानुदघ्नीमुत्तरवेदींखात्वा॥ अपांपूरयति॥ अपाङ्सर्वत्वाय॥ पुष्करपर्णङ् रुक्मंपुरुषमित्युपदधाति॥ तपोवैपुष्करपर्णं॥ सत्यङ्रुक्मः॥ अमृतंपुरुषः॥ एतावद्वावास्ति॥ यावदेतत्॥ यावदेवास्ति॥ ३॥ तदवरुंधे॥ कूर्ममुपदधाति॥ अपामेवमेधमवरुंधे॥ अथोस्वर्गस्यलोकस्यसमष्ट्यै॥ आपमापामपः सर्वाः॥ अस्मादस्मादितोमुतः॥ अग्निर्वायुश्चसूर्यश्च॥ सहसंचस्कुरर्धियाइति॥ वाय्वश्चोरश्मिपतयः॥ लोकंपृणछिद्रंपृण॥ २॥ यास्तिस्रः परमजाः॥ इं

आरण्य
२२

इष्टो षावोंवसुभिरेवा स्येवेति॥ पंचचितयउपदधाति॥ पाङ्क्तोग्निः॥ यावानेवा ग्निः॥ तं चिनुते॥ लोकंपृणयाद्वितीयामुपदधाति॥ पंचपदा वेविराट्॥ तस्यावा इयं पादः॥ अंतरिक्षं पादः॥ द्यौः पादः॥ विराज्येव प्रतितिष्ठति॥ यएतमग्निंचि नुते॥ यउ चैनमेवं वेद॥ ३॥ अग्निपृथ्व्यांतरिक्षंपादः षट् च॥ २५॥ अग्निंप्र णीयोपसमाधाय॥ तमभितएता अबीष्टका उपदधाति॥ अग्निहोत्रे दर्श पूर्णमासयोः॥ पशुबंधे चातुर्मास्येषु॥ अथो आहुः॥ सर्वेषु यज्ञक्रतुष्वि ति॥ अथ हस्माहारुणः स्वायंभुवः॥ सावित्रः सर्वोग्निरित्यनेनुषंगंमन्याम हे॥ नानावाएतेषां वीर्याणि॥ कमग्निं चिनुते॥ ३॥ सत्रियमग्निंचिन्वानः॥ कमग्निंचिनुते॥ चातुर्होत्रियमग्निंचिन्वानः॥ कमग्निंचिनुते॥ वैश्वसृज

सावित्रमग्निंचिन्वानः॥ कमग्निंचिनुते॥ नाचिकेतमग्निंचिन्वानः॥ कमग्निंचिनुते॥ आ रुणकेतुकमग्निंचिन्वानः॥ कमग्निंचिनुते॥ वैश्वसृजमग्निंचिन्वानः॥

दिशः पादः।
पुरीषं मा: पादः।

२२

मग्निं चिन्वानः ॥ कमग्निं चिनुते ॥ २ ॥ उपानुवाक्यमाशुमग्निं चिन्वानः ॥ कमग्निं
चिनुते ॥ इममारुणकेतुकमग्निं चिन्वान इति ॥ एषा वा अग्निः ॥ एषा णोसं
स्फोलयेत् ॥ हन्येतास्य यज्ञः ॥ तस्मान्नानुषज्यः ॥ सोत्तरवेदिषु क्रतुषु चि
न्वीत ॥ उत्तरवेद्यां ह्यग्निश्चीयते ॥ प्रजाकामश्चिन्वीत ॥ ३ ॥ प्राजापत्यो वा
एषोग्निः ॥ प्राजापत्याः प्रजाः ॥ प्रजावान्भवति ॥ य एवं वेद ॥ पशुकामश्चिन्वीत ॥
संज्ञानं वा एतत्पशूनां ॥ यदापः ॥ पशूनामेव संज्ञानेग्निं चिनुते ॥ पशुमान्भ
वति ॥ य एवं वेद ॥ ४ ॥ वृष्टिकामश्चिन्वीत ॥ आपो वै वृष्टिः ॥ पर्जन्यो वर्षुको
भवति ॥ य एवं वेद ॥ आमयावी चिन्वीत ॥ आपो वै भेषजं ॥ भेषजमेवास्मै क
रोति ॥ सर्वमायुरेति ॥ अभिचरंश्चिन्वीत ॥ वज्रो वा आपः ॥ ५ ॥ वज्रमिव

आरण
२३

भ्रातृव्येभ्यः प्रहरति ॥ स्तृणुत एनं ॥ ते जस्कामो यशस्कामः ॥ ब्रह्मवर्चसकामस्स्वर्गकामश्चिन्वीत ॥ एतावद्वावास्ति ॥ यावदेतत् ॥ यावद्दिवास्ति ॥ तदवरुन्धे ॥ तस्यैतद्व्रतं ॥ वर्षति न धावेत् ॥ ६ ॥ अमृतं वा आपः ॥ अमृतस्यानंतरित्यै ॥ नाप्सु मूत्रपुरीषं कुर्यात् ॥ न निष्ठीवेत् ॥ न विवसनस्स्नायात् ॥ गुह्यो वा एषोऽग्निः ॥ एतस्याग्नेरनतिदाहाय ॥ न पुष्करपर्णानि हिरण्यं वाधितिष्ठेत् ॥ एतस्याग्नेरनभ्यारोहाय ॥ न कूर्मस्याश्नीयात् ॥ नोदकस्याघातुकान्येनमोदकानि भवंति ॥ अघातुका आपः ॥ य एतमग्निं चिनुते ॥ य उ चैनमेवं वेद ॥ ७ ॥ चिनुते चिनुते प्रजाकामश्चिन्वीत य एवं वेदापो धावेद श्नीयाच्चत्वारि च ॥ २६ ॥ इमानुकं भुवना सीषधेम ॥ इंद्रश्च विश्वे च देवाः ॥ यज्ञं च नस्तन्वं च

२३

प्रजां च ॥ आदित्यै रिंद्रः सहसीषधातु ॥ आदित्यै रिंद्रः सगणो मरुद्भिः ॥ अ
स्माकं भूत्व वितात नूनां ॥ आ प्लव स्व प्र प्लव स्व ॥ आंडी भव ज मा मुहुः ॥ सुखा
दीं दुःख निधनां ॥ प्रति मुंच स्व स्वां पुरं ॥ १ ॥ मरीच यस्त्वा यं भुवाः ॥ येशारीराण्य
कल्पयन् ॥ ते ते देहं कल्पयंतु ॥ मा च ते ख्यास्म तीरिषत् ॥ उत्तिष्ठत मा स्वप्न
॥ अग्नि मिच्छ ध्वं भारताः ॥ राज्ञः सोमस्य तृप्तासः ॥ सूर्येणा सयुजोषसः
॥ युवा सुवासाः ॥ अष्टा चक्रा नव द्वारा ॥ २ ॥ देवानां पूरयोध्या ॥ तस्यां
हिरण्मयः कोशः ॥ स्वर्गो लोको ज्योतिषा वृतः ॥ यो वै तां ब्रह्मणो वेद ॥
अमृतेनावृतां पुरीं ॥ तस्मै ब्रह्म च ब्रह्मा च ॥ आयुः कीर्तिं प्रजां ददुः ॥ वि
भ्राजमानां हरिणीं ॥ यशसा संपरीवृतां ॥ पुरं हिरण्मयीं ब्रह्मा ॥ ३ ॥ ॥

आरण्य० २८

विवेशापराजिता॥ पराउ॰ स्यैन्यामुषी॥ पराउ॰ स्यैनाशकी॥ इहचामुत्रचा नैति॥ त्रिंशान्देवासुरानुभयान्॥ यत्कुमारीमन्द्रयते॥ यद्योषिद्यत्पतिघ्नी॥ अरिष्टं यत्किं च क्रियते॥ अग्निस्तदनुवेधति॥ अशृतासः शृतासश्च॥ ४॥ यज्वानो येऽप्ययज्वनः॥ स्वर्यन्तो नापेक्षन्ते॥ इन्द्रमग्निं च ये विदुः॥ सिकता इव संयन्ति॥ रश्मिभिः समुदीरिताः॥ अस्माल्लोकादमुष्माच्च॥ ऋषिभिरदात्पृश्निभिः॥ अपेत वीत वि च सर्पतातः॥ ये त्र स्थ पुराणा ये च नूतनाः॥ अहोभिरद्भिरक्तुभिर्व्यक्तम्॥ ५॥ यमो ददात्ववसानमस्मै॥ नृमणं तु नृपात्वर्यः॥ अकृष्टा ये च कृष्टजाः॥ कुमारीषु कनीनीषु॥ जारिणीषु च ये हिताः॥ रेतःपीता आण्डपीताः॥ अङ्गारेषु च ये कृताः॥ उभयान्सु

२८

त्रैपोत्रकान्॥ पुवेहंयमराजेगान्॥ शतमिन्नुशारदः॥ अद्रोयदूत्यंविलुबं॥
पितॄणांचयमस्येच॥ वरुणस्याश्विनोरग्नेः॥ मरुतांचविहायसां॥ कामप्र
यवेणंमेअस्तु॥ सत्यैवास्मिंसुनातेनः॥ इतिनाकोब्रह्मिश्रवोरायोधनं॥ पु
त्रानापोदेवीरिहाहिता॥६॥ पुरंनवेद्धाराब्रत्माचव्यंजंशारदोष्टोर्च॥२॥ आ
विशीर्ष्णींगृध्रशीर्ष्णींच॥ अपेतोनिर्ऋतिंहथः॥ परिबाधंश्वेतकुक्षं॥
निजंघंशाबुलोदरं॥ सतान्वाच्यार्ययासह॥ अग्नेनाशयसंदृशः॥ ईर्ष्यासू
येबुभुक्षां॥ मन्युंकृत्यांचदीधिरे॥ रथेनकिंशुकावता॥ अग्नेनाशयसंदृ
शः॥३॥ पर्जन्यायप्रगायत॥ दिवस्पुत्रायमीढुषे॥ सनोयवसमिच्छतु॥ इ
दंवचःपर्जन्यायस्वराजे॥ हृदोअस्त्वंतरंतद्युयोत॥ मयोभूर्वातोविश्वकृष्ट

यः स्तं तु स्म ॥ सुपिप्पला ओषधीर्देवगोपाः ॥ योगर्भमोषधीनां ॥ गवां कृणो
त्यर्वतां ॥ पर्जन्यः पुरुषीणां ॥ ३ ॥ विरीब्बी पर्जन्याय दशीदश ॥ २९ ॥ पुनर्न
मां मैत्विंद्रियं ॥ पुनरायुः पुनर्भगः ॥ पुनर्ब्राह्मणमैतु मा ॥ पुनर्द्रविणमैतु
मा ॥ यन्मे द्य रेतः पृथिवीमस्कान् ॥ यदोषधीरप्यसरद्यदापः ॥ इदं तत्पुन
रादंदे ॥ दीर्घायुत्वाय वर्चसे ॥ यन्मे रेतः प्रसिच्यते ॥ यन्म आजायते पुनः ॥ तेन माम
मृतं कुरु ॥ तेन सुप्रजसं कुरु ॥ ३ ॥ पुनर्द्वे च ॥ ३० ॥ अद्भ्यस्तिरोधाजायत ॥
तव वैश्रवणः सदा ॥ तिरोधेहि सपत्नान्नः ॥ ये अपोश्नंति केचन ॥ त्वाष्ट्रीं मा
यां वैश्रवणः ॥ रथं सहस्रबंधुरं ॥ पुरुश्चक्रं सहस्राश्वं ॥ आस्थायायाहि नो बलिं ॥ यस्मै भूतानि बलिमावहंति ॥ धनं गावो हस्ति हिरण्यमश्वा

नू॥ अ १॥ असौ मसुमुतोयुक्षियस्य॥ श्रियं बिभ्रतो न्नमुखी विराजं॥ सुदर्शनेच क्रौंचेच॥ मैनाकेचमहागिरौ॥ सुतद्वाट्टारं कमं॑ता॥ संहार्यं नगरं तव॥ इतिमंत्रो॥ क स्यो तदुर्ध्वं॥ यदि बलिं हरेत्॥ हिरण्यनाभये॥ वितुदये कौबेराया यं बलिः॥ २॥ सर्वभूताधिपतये नम इति। अथ बलिं हृत्वोपतिष्ठेत॥ क्षत्रं क्षत्रं वैश्रवणः॥ ब्राह्मणा वयं स्मः॥ नमस्ते अस्तु मा मा हिंसीः॥ अस्मात्प्रविश्यान्नमद्धीति॥ अथ तमग्निमादधीत॥ यस्मिन्नेतत्कर्म प्रयुंजीत॥ तिरोधाभूः॥ तिरोधाभुवः॥ ३॥ तिरोधास्वः॥ तिरोधाभूर्भुवस्वः॥ सर्वेषां लोकानामाधिपत्ये सीदेति॥ अथ तमग्निमिंधीत॥ यस्मिन्नेतत्कर्म प्रयुंजीत॥ तिरोधा

आरण्य
२५

भूः स्वाहा ॥ तिरोधा भुवः स्वाहा ॥ तिरोधाः स्वः स्वाहा ॥ तिरोधा भूर्भुवः स्वः स्वाहा ॥ यस्मिन्नस्य काले सर्वा आहुतीर्हुता भवेयुः ॥ ४ ॥ अपि ब्राह्मणमुखीना ॥ तस्मिन्नह्नः काले प्रयुञ्जीत ॥ परः सुप्तजनाद्वेपि ॥ मास्मप्रमाद्यन्तमाध्यापयेत् ॥ सर्वार्थाः सिध्यन्ते ॥ य एवं वेद ॥ क्षुध्यन्निदमजानतां ॥ सर्वार्था न सिध्यन्ते ॥ यस्ते विघातुको भ्राता ॥ ममान्तर्हृदये श्रितः ॥ अद्भ्यस्तस्मा इममग्रपिण्डं जुहोमि ॥ स मेर्थान्मा विवधीत् ॥ मयि स्वाहा ॥ राजाधिराजाय प्रसह्यसाहिने ॥ नमो वयं वैश्रवणाय कुर्महे ॥ स मे कामान्कामकामाय मह्यं ॥ कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय वैश्रवणाय ॥ महाराजाय नमः ॥ केतवो अरुणासश्च ॥ ऋषयो वातरशनाः ॥ प्रतिष्ठां

२६

शतधा हि ॥ सुमा हिंसासीः सहस्रधायसं ॥ शिवा नः शंतमा भवंतु ॥ दि
व्या आप ओषधयः ॥ सुमृडीका सरस्वति ॥ मा ते व्योम संदृशि ॥ ६ ॥
अश्वान्बलिर्भुवो भवेयुः श्रुतश्च सुसचे ॥ ३१ ॥ संवत्सरमेतद्व्रतं चरेत् ॥
द्वौ वा मासौ ॥ नियमः समासेन ॥ तस्मिन्नियम विशेषाः ॥ त्रिषवणमु
दकोपस्पर्शी ॥ चतुर्थकालपानभक्तः स्यात् ॥ अहरहर्वा भैक्षमश्नी
यात् ॥ औदुंबरीभिः समिद्भिरग्निं परिचरेत् ॥ पुनर्मामैत्विंद्रियमि
त्येतेनानुवाकेन ॥ उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वीत ॥ ३ ॥ असं
चययान् ॥ अग्नये वायवे सूर्याय ॥ ब्रह्मणे प्रजापतये ॥ चंद्रमसे
नक्षत्रेभ्यः ॥ ऋतुभ्यः संवत्सराय ॥ वरुणायारुणायेति व्रतहोमाः ॥

आरण०

॥२७॥

प्रवर्ग्यवदादेशः॥अरुणाः कांडऋषयः॥अरण्येधीयीरन्॥भद्रंकर्णेभिरितिद्वेजपित्वा॥२॥महानाम्नीभिरुदकसंस्पर्श्य॥तमाचार्योदद्यात्॥शिवानःशंतमेत्योषधीरालभेते॥सुमृडीकेतिभूमिं॥एवमपवर्गे॥धेनुर्दक्षिणा॥कंसंवासश्चक्षौमं॥अन्यद्वाशुक्लं॥यथाशक्तिवा॥एवंस्वाध्यायधर्मेण॥अरण्येधीयीत॥तपस्वीपुण्योभवतितपस्वीपुण्योभवति॥ ॥३॥ ॥कुर्वीतजपित्वास्वाध्यायधर्मेणद्वेच॥३२॥भद्रंस्मृतिःसाकंजानामक्ष्यतितान्यत्स्वप्नोक्षआरोगः ॥ केदमग्निश्चसहस्रवृसविभवंतुआतनुषाष्टयोनीयोसावयादित्यस्यारोगस्याथवायोर

॥२७॥

थाग्नेर्दक्षिणपूर्वस्यामिंद्रयोषावुआर्पमायांयोपामापोवैचतुष्टय्याजानु
दुघ्नीमग्निंमणीयेमानुकुंविशंहिपर्जन्यायपुनरुज्ञ्यःसंवत्सरंद्वात्रिं
शत्रमैभद्रंज्योतिषांप्रतिरव्येनसुस्तस्मिन्नाजानंकुश्यपोसहस्त्र दिय
न्त्यप्तृंसंकमष्टयोनीमयपतंतानामायतनवान्सतोबंधुंताउंसरतो
वज्रमुयम्नात्तेभ्योभ्यःपुनर्ममीमेलिंद्रियंत्रिंशदुत्तरतःशतं॥ ॥१३०॥
भद्रंकर्णेभिःश्रणुयामदेवाः॥भद्रंपश्येमाक्षभिर्यजत्राः॥स्थिरैरंगैस्तु
ष्टुवांसस्तनूभिःव्यशेमदेवहितंयदायुः॥स्वस्तिनइंद्रोवृद्धश्रवाः॥
स्वस्तिनःपूषाविश्ववेदाः॥स्वस्तिनस्ताक्ष्योअरिष्टनेमिः॥स्वस्ति
नोबृहस्पतिर्दधातु॥ॐशांतिःशांतिःशांतिः॥ ॥ ॥

हरिः ओम् ॥ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ओं शांतिः शांतिः शांतिः ॥ ॐ ॥ सह वै देवानां चासुराणां च यज्ञो प्रततावास्तां वयं स्वर्गलोकमेष्यामो वयमेष्याम इति ते सुराः संनह्य सहसैवाचरन्ब्रह्मचर्येण तपसैव देवास्ते सुरा अमुह्यंस्ते न प्राजानंस्ते परीभवन्त्ते न स्वर्गलोकमायन्प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान्परीभावयन्प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किंच ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिण

॥ १२८ ॥ ॥ १ ॥

त उपवीतं तं संवीतं मानुषं ॥१॥ रक्षां ऽसि ह वा पुरोनुवाके तपोग्रमतिष्ठं
त तान्प्रजापतिर्वरेणोपामंत्रयत तानि वरमवृणीतादित्यो नो योद्धा इति
तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठंतं ह वा तानि रक्षां ऽ
स्यादित्यं योधयंति यावदस्तमन्वगात्तानि ह वा एतानि रक्षां ऽसि गाय
त्रियाभिमंत्रितेनांभसा शाम्यंति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमु
खाः संध्यायां गायत्रियाभिमंत्रिता आप ऊर्ध्वं विक्षिपंति ता एता आ
पो वज्री भूत्वा तानि रक्षां ऽसि मंदेहारुणे द्वीपे प्रक्षिपंति यत्प्रदक्षिणं
प्रक्रमंति तेन पाप्मानमवधून्वंत्युद्यंतमस्तं यंतमादित्यमभिध्या
यन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते ऽसावादित्यो ब्रह्मेति ब्रह्मै
मुदक्षिणं बाहुमुद्धरते ऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं

अरण

२९॥

वसन्त्रस्ताप्येतिय एवं वेद॥ २॥ यद्देवा देवहेळनं देवासश्चकृमा

वयं॥ आदित्यास्तस्मान्मा मुंचतर्तस्य नमा मित॥ देवाजीवनका

म्याय यद्वाचानृतमूदिम॥ तस्मान्न इह मुंचतु विश्वे देवाः सजो

षसः॥ ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति॥ कृतान्नः

पाह्येनसो यत्किं चानृतमूदिम॥ इंद्राग्नी मित्रावरुणौ सोमो धा

ता बृहस्पतिः॥ ते नो मुंचंत्वेनसो यदन्यकृतमारिम॥ सजात

शंसादुत जामि शंसाज्ज्यायसः शंसादुत वा कनीयसः॥

अनाधृष्टं देवकृतं यदेनस्तस्मात्वमस्माञ्जातवेदो मुमुग्धि॥ १०॥ २९॥

यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां शिश्नैर्यदनृतं

तस्य

चकृमा वयं ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचकृमयानि तुच
दुष्कृता ॥ येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच ॥
येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आ
क्षि ॥ यत्कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि ॥ ए
तत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥ यन्मयि
माता यदा पिपेष यदंतरिक्षं यदाशसातिक्रामामि त्रितेदेवा
दिविजाता यदापइमं मे वरुण तत्त्वो यामि त्वन्नो अग्ने स त्वन्नो
अग्ने त्वमग्ने अयासि ॥ ३ ॥ यददीव्यं नृणमहं बभूवादित्संन्वा
संजगर जनेभ्यः ॥ अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुंच

अरण

तां॥ यद्धस्ताभ्यांचकर्‌किल्बिषाण्यक्षाणांवृत्नुमुपलिप्समानः॥
उग्रंपश्याचेराष्ट्रभृच्चतान्यप्सरसावनुदत्तामृणानि॥ उग्रंपश्ये
॥३०॥ राष्ट्रभृत्किल्बिषाणियदक्षवृत्तमनुदत्तमेतत्॥ नेन्नऋणानृणवृ
२१ इत्समानोयमस्यलोकेअधिरज्जुरायत्॥ अवतेहेडउदुत्तममिमंमे
वरुणतत्त्वायामित्वन्नोअग्नेसत्वंनोअग्ने॥ संकसुकोविकसुको
निर्ऋथोयश्चनिस्वनः॥ तेऽस्मद्यक्ष्ममनागसोदूराद्दूरमचीचतं॥
निर्यक्ष्ममचीचतेकृत्यान्निर्ऋतिंच॥ तेनायोऽस्मत्समृच्छातैत
मस्मैप्रसुवामसि॥ दुःशंसानुशंसाभ्यांघृणेनानुघृणेनच॥ ॥३०॥
तेनान्योऽस्मत्समृच्छातैतमस्मैप्रसुवामसि॥ संवर्चसापयसा

न्यै

संतनूभिरगन्महिमनसासꣳशिवेन॥त्वष्टानोअत्रविदधातु
रायोनुमार्ष्टुतन्वोयद्विलिष्टं॥४॥आयुष्टेविश्वतोदधदयम
ग्निर्वरेण्यः॥पुनस्तेप्राणआयातिपरायक्ष्मꣳसुवामिते॥
आयुर्दाअग्नेहविषोजुषाणोघृतप्रतीकोघृतयोनिरेधि॥
घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमं॥इममग्न
आयुषेवर्चसेकृधितिग्ममोजोवरुणसꣳशिशाधि॥मातेवा
स्माअदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्॥अग्न
आयूꣳषिपवसआसुवोर्जमिषंचनः॥आरेबाधस्वदुच्छुनां॥
अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं॥अग्नेजातान्प्रणुदा

अरण

॥३१॥

दधेद्रयिं मयि पोषं ॥ अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः ॥ त
मीमहे महागयं ॥ अग्ने जातान्प्रणुदानः सुपत्नान्प्रत्यजातान्जातवेदो
नुदस्व ॥ अस्मे दीदिहि सुमना अहेडं छर्मं ते स्याम त्रिवरूथ उद्भौ ॥
सहसा जातान्प्रणुदानः सुपत्नान्प्रत्यजातान्जातवेदो नुदस्व ॥ अ
धिनो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदानः सुपत्नान् ॥
अग्ने यो नो भितो जनो वृको वारो जिघांसति ॥ तां स्त्वं वृत्रहं
जहि वस्वस्मभ्यमाभर ॥ अग्ने यो नो भिदासति समानो यश्च नि
ष्ट्यः ॥ तं वयं समिधं कृत्वा तुभ्यमग्ने पिदध्मसि ॥ यो नः शपाद
शपतो यश्च नः शपतः शपात् ॥ उभाश्च तस्मै निमुक्तः सर्वं पापं

॥३१॥

प

समूहतां॥ योनःसपत्नोयोरणोमर्तोभिदासतिदेवाः॥इध्मस्ये
वप्रक्षायतोमातस्योच्छेषिकिंचन॥योमान्द्वेष्टिजातवेदोयंचाहं
द्वेष्मियश्चमां॥सर्वाऽंस्तानग्नेसंदहयाऽंश्चाहंद्वेष्मियेचमां॥
योअस्मभ्यमरातीयाद्यश्चनोद्वेषतेजनः॥निंदाद्योअस्मा
न्दिप्साच्चसर्वाऽंस्तान्मष्मषाकुरु॥संशितंमेब्रह्मसंशितं
वीर्यं२बलं॥संशितंक्षत्रंमेजिष्णुयस्याहमस्मिपुरोहितः॥ 3
उदेषांबाहूअतिरमुद्वर्चोअथोबलं॥क्षिणोमिब्रह्मणामित्रा
नुन्नयामिस्वांअहं॥पुनर्मेनःपुनरायुर्मआगात्पुनश्च
क्षुःपुनश्श्रोत्रंमआगात्सुनःप्राणःपुनराकूतंमआगात्सुनेश्चि

अरण

॥३२॥

तं पुनराधीतं मम आगात्॥वैश्वानरो मे दं ब्यस्तनूपा अवबाधतां दुरितानि विश्वा॥५॥वैश्वानराय प्रतिवेदयामो यदीनृणं संगरो देवतासु॥स एतान्पाशान्प्रमुचन्प्रवेद सनो मुंचातु दुरितादवद्यात्॥वैश्वानरः पवयांनः पवित्रैर्यत्संगरमभिधावाम्याशां॥अनोजानन्मनसा याचमानो यद्त्रैनो अव तत्सुवामि॥अमियि सुमगैर्दिवि विचृतौ नाम तारके॥प्रहामृतस्य यच्छतामेतद्बद्धकमोचनं॥वि जिहीष्व लोकान्कृधि बंधान्मुंचासि बद्धकं॥योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनु ष्व॥स प्रजा ॥३२॥ नन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य॥अस्मा

मिदं तं जरसः पुरस्ताद् छिन्नं तंतुमनुसंचरेम ॥ तंतं तंतुमन्वेके अ
नुसंचरंति येषां दत्तं पित्र्यमायनवत् ॥ अबंध्वेकं ददतः प्रयच्छाद्दातुं
चेच्छक्नवां स स्वर्ग एव ॥ आरभेथामनुसंरभेथां समानं पंथा
मवथो घृतेन ॥ यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायाप
ती सं रभेथां ॥ यदंतरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिं
सिम ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि च
कृम ॥ भूमिर्मातादितिर्नो जनित्रं भ्रातांतरिक्षमभिशस्त्या नः ॥
द्यौर्नः पिता पित्र्याच्छं भवाति जामिमित्वा मा वि वित्सि लोकात् ॥
यत्रा सुहार्दः सुकृतो मदंति विहाय रोगं तन्वः स्वायाः ॥ अश्लोणा

अरण

॥३३॥

गेरक्रुताः स्वर्गतं पश्येम पितरं च पुत्रं ॥ २ ॥ यदन्नमत्त्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन् ॥ यद्देवानां चक्षुष्यागो अस्ति यद्देव किंच प्रतिजग्राह मुग्निर्मा तस्मादनृणं कृणोतु ॥ यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामुजामविं ॥ यद्देवानां चक्षुष्यागो अस्ति यद्देव किंच प्रतिजग्राह मुग्निर्मा तस्मादनृणं कृणोतु ॥ यन्मया मनसा वाचा कृतमेनः कदाचन ॥ सर्वस्मात्तस्मान्मे किंतामो ग्धि त्वं हि वेत्थ यथातथं ॥ ६ ॥ वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमंथिनो बभूवुस्तानृषयोर्थमायंस्ते निलायमचरंस्ते नुप्रविशुः कूश्मांडानि तांस्त्वेषन्वविंदन्छ्रद्धया च तपसा च त

॥३३॥

पैसाचत्तानृषयोब्रुवन्कथानिलायंचरथेतितऋषीनब्रुवन्नमोवोस्तुभगव
न्तोस्मिन्धाम्निकेनवःसपर्यामेतितानृषयोब्रुवन्पवित्रंनोब्रूतयेनारेपस
स्यामेतितएतानिसूक्तान्यपश्यन्यद्देवादेवहेडनंयददीव्यन्नृणमहंबभूवा
युष्टेविश्वतोदधदित्येतैराज्यंजुहुतवैश्वानरायप्रतिवेदयामइत्युपतिष्ठ
तयदर्वाचीनमेनोभ्रूणहत्यायास्तस्मान्मोक्ष्यध्वइतितएतैरजुहवुस्तेरेप
सोभवन्कर्मादिष्टैतैर्जुहुयात्पूतोदेवलोकान्समश्नुते॥७॥कूश्मांडैर्जुहु
यात्योपूतइवमन्येतयथास्तेनोयथाभ्रूणहैवमेषभवतियोयोनौरेतःसिं
चतियदर्वाचीनमेनोभ्रूणहत्यायास्तस्मान्मुच्यतेयावदेनोदीक्षामुपै

तिदीक्षितएतैःसंततिंजुहोतिसंवत्सरंदीक्षितोभवतिसंवत्सरादेवा

अरण ॥३४॥

सानंपुनीतेमासंदीक्षितोभवतियोमासःससंवत्सरःसंवत्सराद्देवासानंपु
नीतेचतुर्विंशतिंरात्रीर्दीक्षितोभवतिचतुर्विंशतिरर्धमासाःसंव
त्सरःसंवत्सराद्देवासानंपुनीतेद्वादशरात्रीर्दीक्षितोभवतिद्वादशमासाः
संवत्सरःसंवत्सराद्देवासानंपुनीतेषड्रात्रीर्दीक्षितोभवतिषड्वाऋत
वःसंवत्सरःसंवत्सराद्देवासानंपुनीतेतिस्रोरात्रीर्दीक्षितोभवतित्रिपदा
गायत्रीगायत्रियाएवासानंपुनीतेनमांसमश्नीयान्नस्त्रियमुपेया
न्नोपर्यासीतजुगुप्सेतानृतात्पयोब्राह्मणस्यव्रतंयवागूराजन्यस्यामि
क्षावैश्यस्याथोसोम्येप्यध्वरएतद्व्रतंब्रूयाद्यदिमन्येतोपदस्यामीत्यो ॥३४॥
दनंधानाःसक्तून्घृतमित्यनुव्रतयेदात्मनोनुपदासाय ॥८॥ अजा

न्ह वै पृश्नीँस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्त ऋषयोऽभवन्तदृषीणा
मृषित्वं तां देवतामुपातिष्ठंत यज्ञकामास्त एतं ब्रह्मयज्ञमपश्यन्तमाह
रन्तेनायजंत यदृचोऽध्यगीषत ता पयस आहुतयो देवानामभवन्यद्यजूं
ंषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वांगिरसो मध्वाहुतयो
यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदाहुत
यो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवाः स्व
र्गं लोकमायन्ब्रह्मणः सायुज्यमृषयोऽगच्छन् ॥ ९ ॥ पंच वा एते महायज्ञा
ज्ञाः सतति प्रतायंते सतति संतिष्ठंते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्य
यज्ञो ब्रह्मयज्ञ इति यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते

अरण

॥३५॥

यत्पितृभ्यः स्वधाकरोत्यप्युपस्तत्पितृयज्ञः संतिष्ठते यद्भूतेभ्यो बलिं
हरति तद्भूतयज्ञः संतिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः
संतिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः सं
तिष्ठते यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ति यद्य
जूंषि घृतस्य कुल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो म
धोः कुल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशं
सीर्मेदसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ति यदृचोऽधीते पय आ
हुतिभिरेव तद्देवांस्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि ॥३५॥
सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासा

भि

न्पुराणानिकल्पान्गाथानाराशंसीर्मेदाहुतिभिरेवतद्देवांस्तर्पय
तितएनंतृप्ताआयुषातेजसावर्चसाश्रियायशसाब्रह्मवर्चसेना
न्नाद्येनचतर्पयंति॥१०॥ब्रह्मयज्ञेनयक्ष्यमाणःप्राच्यांदिशिग्रा
दैमोछदिर्दर्शउदीच्यांप्रागुदीच्यांवोदितआदित्येदक्षिणतउपवीयोपु
विश्यहस्तावनिज्यत्रिराचामेद्द्विःपरिमृज्यसकृदुपस्पृश्यशिरश्च
क्षुषीनासिकेश्रोत्रेहृदयमालभ्ययत्त्रिराचामतितेनऋचःप्रीणाति
यद्द्विःपरिमृजतितेनयजूंषियत्सकृदुपस्पृशतितेनसामानियत्सव्यं
पाणिंपादौप्रोक्षतियच्छिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभतेतेना
थर्वांगिरसोब्राह्मणानीतिहासान्पुराणानिकल्पान्गाथानाराशं

अरण ।३६।।

सीः प्रीणाति दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायम
धीयीतापां वा एष ओषधीनाꣳ रसो यद्दर्भाः सरसमेव ब्रह्म कुरुते दक्षिण
उत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां
प्रत्येषा वागेतत्परममक्षरं तदेतदृचाभ्युक्तम् ऋचो अक्षरे परमे व्योमन्य
स्मिन्देवा अधि विश्वे निषेदुः यस्तन्न वेद किमृचा करिष्यति य इत्तद्वि
दुस्त इमे समासत इति त्रीनेव प्रायुङ्क्त भूर्भुवः स्वरित्याहैतद्वै वाचः सत्य
यदेव वाचः सत्यं तत्प्रायुङ्क्ताथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्चशो
ऽनवानꣳ सविता श्रियः प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञातयैव प्र ॥३६॥
तिपदा छन्दाꣳसि प्रतिपद्यते ॥१॥ [illegible] स्वाध्यायमधीयी

श्री

तुदिवानक्तंवृत्तिर्हस्माहशौचेयंह्युत्तारेण्यबलंउतवाचोततिष्ठन्नुत
व्रजन्नुतासीनउतशयानोऽधीयीतैवस्वाध्यायंतपस्वीपुण्योभव
तियएवंविद्वान्त्स्वाध्यायमधीतेनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृ
थिव्यैनमओषधीभ्यः॥नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृह
तेकरोमि॥१२॥मध्यंदिनेप्रबलमधीयीतासौखलुवावैषआदित्यो
यद्ब्राह्मणस्तस्मात्तर्हितेक्ष्णिष्ठंतपतितदेषाभ्युक्ता॥चित्रंदेवानामु
दगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः॥आप्राद्यावापृथिवीअंतरि
क्षंसूर्यआत्माजगतस्तस्थुषश्चेतिसवाएषयज्ञःसद्यःप्रतायतेस
द्यःसंतिष्ठतेतस्यप्राक्सायमवभृथोनमोब्रह्मणइतिपरिधानीयां

॥३७॥

त्रिरन्वीहाप उपस्पृश्य गृहानेति ततो यत्किं च ददाति सा दक्षिणा ॥१३॥ तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं विद्युदग्निर्वर्षꣳ हविस्तनयित्नुर्वषट्कारो यदवस्फूर्जति सानुवषट्कारो वायुरात्मामावास्या स्विष्टकृत्स य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायाꣳ स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इत्युत्तमन्नाकꣳ रोहत्युत्तमः समानानां भवति यावन्तꣳ ह वा इमं वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाꣳसं चाक्षय्यं चाप पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति ॥१४॥ तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः समृद्धिर्देवता ॥३७॥

भिर्दक्षिणा

नियएवंविद्वान्महारात्रउषस्युदितेव्रजंस्तिष्ठन्नासीनःशयानो
रण्येग्रामेवायावत्तरसंस्वाध्यायमधीतेसर्वांल्लोकांजयतिसर्वांल्लो
कानेनृणोनुसंचरतितदेषाभ्युक्ता।।अनृणाअस्मिन्ननृणाःपरस्मि
न्स्तृतीयेलोकेअनृणाःस्याम।।येदेवयानाउतपितृयाणाःसर्वान्प या
थोअनृणाआक्षीयेमेत्यग्निर्वैजातंपाप्माजग्राहतंदेवाआहुती
भिःपाप्मानमपाघ्नन्नाहुतीनांयज्ञेनयज्ञस्यदक्षिणाभिर्दक्षिणानांब्राह्मणेन
ब्राह्मणस्यछंदोभिश्छंदसांस्वाध्यायेनापहतपाप्मास्वाध्यायो
देवपवित्रंवाएतत्तंयोनूत्सृजत्यभागोवाचिभवत्यभागोनाकेतदेषा
भ्युक्ता।।यस्तित्याजसखिविदंसखायंनतस्यवाच्यपिभागोअ

अरण
॥३८॥

स्ति॥ यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पंथामिति
तस्मात्स्वाध्यायोध्येतव्यो यंयं क्रतुमधीते तेनतेनास्येष्टं भवत्यग्ने
र्वायोरादित्यस्य सायुज्यं गच्छति तदेषाभ्युक्ता॥ ये अर्वाङुत वा पुरा
णे वेदं विद्वांसमभितो वदंत्यादित्यमेव ते परिवदंति सर्वे अग्निं द्वितीयं तृती
यं च हंसमिति यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसंति तस्मा
द्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देव
ताः प्रीणाति ॥१५॥ रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति
वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नंस्त्रिः स्वाध्यायं वेदमधीयीत त्रि
रात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति वरो दक्षिणा वरेणैव वरं स्पृ

॥३८॥

णोत्यात्मा हविः ॥१६॥ दृढे ह वा एष छंदाꣳसि यो याजयति स येन यज्ञ
क्रतुना याजयेत्सोऽरण्यं परेत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासी
त तस्यानशनं दीक्षा स्थानमुपसद आसनꣳ सुत्या वाग्जुहूर्मन उपभृ
द्धृतिर्ध्रुवा प्राणो हविः सामाध्वर्युः स वा एष यज्ञः प्राणदक्षिणोऽनन्त
दक्षिणः समृद्धतरः ॥१७॥ कतिधावकीर्णी प्रविशति चतुर्धेत्याहु
र्ब्रह्मवादिनो मरुतः प्राणेरिंद्रं बलेन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेत
रेण सर्वेण तस्यैतां प्रायश्चित्तिं विदांचकार सुदेवः काश्यपो यो ब्रह्म
चार्यवकिरेदमावास्यायाꣳ रात्र्यामग्निं प्रणीयोपसमाधाय द्विराज्य
स्योपघातं जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वा

अरंण

॥३९॥

हाकामामिंद्रुग्धोस्म्यभिंद्रुग्धोस्मिकामकामायस्वाहेत्यमृतंवाआज्यम
मृतमेवात्मन्धत्ते हुत्वाप्रयतांजलिःकवातिर्यङ्ङग्निमभिमंत्रयेत्संमा
सिंचंतुमरुतःसमिंद्रःसंबृहस्पतिः॥संमायमग्निःसिंचत्वायुषाच
बलेनचायुष्मंतंकरोतमेतिप्राणाहास्येमरुतःप्राणान्दधतिप्रतींद्रो
बलंप्रतिबृहस्पतिर्ब्रह्मवर्चसंप्रत्यग्निरितरत्सर्वंसर्वतनुर्भूत्वास
र्वमायुरेतित्रिरभिमंत्रयेतत्रिषत्याहिदेवायोपूतइवमन्येतसइत्थंजु
हुयादित्यमभिमंत्रयेतपुनीतएवात्मानमायुरेवात्मन्धत्तेवरोदक्षि
णावरेणैववरंस्पृणोत्यात्माहिवरः॥३८॥भूःप्रपद्येभुवःप्रपद्येस्वः॥३९॥
प्रपद्येभूर्भुवःस्वःप्रपद्येब्रह्मप्रपद्येब्रह्मकोशंप्रपद्येमृतंप्रपद्येमृतको

शं प्रपद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये देवान्प्रपद्ये देवपु
रं प्रपद्ये परीवृतो वरीवृतो ब्रह्मणा यमीणाहं तेजसा कश्यपस्य यस्मै नमस्त
च्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोधरा विष्णुर्हृदयं संवत्सरः प्रजन
नमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुछस्य प्र
थमं कांडं तत इंद्रस्ततः प्रजापतिरभयं चतुर्थं स वा एष दिव्यः शाक्वरः
शिशुमारस्तं ह य एवं वेदापपुनर्मृत्युं जयति जयति स्वर्गं लोकं नाध्व
नि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वा
न्नो भवति ध्रुवस्त्वमसि ध्रुवस्य क्षितमसि त्वं भूतानामधिपतिरसि
ता. त्वं भूतानां श्रेष्ठोसि त्वां भूतान्युपपर्यावर्तंते नमस्ते नमः सर्वं ते न

अ०१७

॥४०॥

मोनमः शिशुकुमारायनमः ॥१९॥ नमः प्राच्यै दिशे याश्च देवता एत
स्यां प्रतिवसंत्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एत
स्यां प्रतिवसंत्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां
प्रतिवसंत्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रति
वसंत्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसंत्ये
ताभ्यश्च नमो नमो धरायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्य
श्च नमो नमोवांतरायै दिशे याश्च देवता ए(त)स्यां प्रतिवसंत्येताभ्यश्च न
मो नमो गंगायमुनयोर्मध्ये ये वसंति ते मे प्रसन्नात्मानश्चिरंजीवितं
वर्धयंति नमो गंगायमुनयोर्मुनिभ्यश्च नमो नमो गंगायमुनयोर्मु

॥४०॥

निभ्यश्चनमः ॥२०॥ सहस्रस्तोऽस्त्रियर्द्देवाः सप्तदशायदद्राव्यं पंचदशायु
ष्ट्रचतुः स्त्रिंशद्वैश्वानरायषड्विंशातिर्वातिरशनाहकूश्मांडैरजाहूपंच
ब्रह्मयज्ञेनग्रामेमध्यंदिनेतस्यवेमेघुस्तस्युवेद्धोरिच्यतेदुहेहैकति
थावेकीर्णीभूर्नमःप्राच्यैविंशतिः ॥ ॥सहवैब्रह्मयज्ञेनविंशतिः
॥२०॥ नमोब्रह्मणेनमोऽस्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः ॥ न
मोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ ॐ शांतिः शांतिः
शांतिः ॥ ॥ हरिः ओम् ॥ तच्छंयोरावृणीमहे ॥ गातुंयज्ञाय ॥ यज्ञप गातुं
तये ॥ देवीः स्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुमेषजं ॥
शंनोअस्तुद्विपदे ॥ शंचतुष्पदे ॥ ॐ शांतिः शांतिः शांतिः ॥ ॐ ॥

चित्तिःस्रुक्॥चित्तमाज्यं॥वाग्वेदिः॥आधीतंबर्हिः॥केतोअग्निः॥विज्ञात
मग्निः॥वाचस्पतिर्होता॥मनउपवक्ता॥प्राणोहविः॥सामाध्वर्युः॥वाचस्प
तेविधेनामन्॥विधेमतेनाम॥विधेस्त्वमस्माकंनाम॥वाचस्पतिःसोमंपि
बतु॥आस्मासुनृम्णंधास्वाहा॥१॥अध्वर्युःपंचच॥१॥पृथिवीहोता॥
द्यौरध्वर्युः॥रुद्रोग्नीत्॥बृहस्पतिरुपवक्ता॥वाचस्पतेवाचोवीर्येण॥
संभृततमेनायक्ष्यसे॥यजमानायवार्यं॥आसुवस्करस्मै॥वाचस्पतिः
सोमंपिबति॥जजनदिंद्रमिंद्रियायस्वाहा॥१॥पृथिवीहोतादश॥२॥अ
ग्निर्होता॥अश्विनाध्वर्यू॥त्वष्टाग्नीत्॥मित्रउपवक्ता॥सोमःसोमस्य
पुरोगाः॥शुक्रःशुक्रस्यपुरोगाः॥श्वात्तास्तइंद्रसोमाः॥वातापेर्हवनश्रु

तुः स्वाहा ॥१॥ अग्निर्होता छो ॥२॥ सूर्यं ते चक्षुः ॥ वातं प्राणः ॥ द्यां पृष्ठं ॥ अं
तरिक्षमात्मा ॥ अंगैर्यज्ञं ॥ पृथिवीं शरीरैः ॥ वाचस्पते छिद्रया वाचा ॥ अछि
द्रया जुहो ॥ दिवि देवावृधं होत्रामेरयस्व स्वाहा ॥१॥ सूर्यं तेन वै ॥४॥ महाह
विर्होता ॥ सत्यहविरध्वर्युः ॥ अच्युतपाजा अग्नीत् ॥ अच्युतमना उपवक्ता ॥
अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ ॥ अयास्य उद्गाता ॥ वाचस्पते ह
द्विधेनामन् ॥ विधेम ते नाम ॥ विधेस्त्वमस्माकं नाम ॥ वाचस्पतिः सोमं मपात् ॥
मा दैव्यस्तंतुश्छेदि मा मनुष्यः ॥ नमो दिवे ॥ नमः पृथिव्यै स्वाहा ॥१॥ अपाश्री
णि च ॥५॥ वाग्घोता ॥ दीक्षापत्नी ॥ वातोध्वर्युः ॥ आपोभिगरः ॥ मनोहविः ॥
तपसि जुहोमि ॥ भूर्भुवः सुवः ॥ ब्रह्म स्वयंभु ॥ ब्रह्मणे स्वयंभुवे स्वाहा ॥१॥

प्रतिष्ठा च मे भूयात्॥ अंतरिक्षं चतुर्होता॥ स विष्ठाः॥

अरण ॥४२॥

वाग्घोतानवं मह्॥ ब्राह्मणएकहोता॥ स यज्ञः॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ यज्ञश्च मे भूयात्॥ अग्निर्द्विहोता॥ स भर्ता॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ भर्ता च मे भूयात्॥ पृथिवी त्रिहोता॥ स प्रतिष्ठा॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ विष्ठाश्च मे भूयात्॥ वायुः पंचहोता॥ स प्राणः॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ प्राणश्च मे भूयात्॥ चंद्रमाः षड्ढोता॥ स ऋतून्कल्पयाति॥

पशू

स मे ददातु प्रजां पुष्टिं यशः॥ ऋतवश्च मे कल्पंतां॥ अन्नं सप्तहोता॥ स प्राणस्य प्राणः॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ प्राणस्य च मे प्राणो भूयात्॥ द्यौरष्टहोता॥ सोनाधृष्यः॥ ३॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥ अनाधृष्यश्च भूयासं॥ आदित्यो नवहोता॥ स तेजस्वी॥ स मे ददातु प्रजां पशून्पुष्टिं यशः॥

प्रश्न ... ॥४२॥

अग्निर्यजुर्भिः॥ सविता स्तोमैः॥ इन्द्र उक्थामदैः॥ मित्रावरुणा

तेन स्वी च भूयासं॥ प्रजापतिर्दशहोता॥ स इदं सर्वं॥ स मे ददातु प्रजां पशून्पुष्टिं य शः॥

सर्वं च मे भूयात्॥ ४॥ प्रतिष्ठा प्राणश्च मे भूयादनाधृष्यः सर्वं च मे भूयात्॥ ७॥

अंगिरसो धिष्ण्यैरग्निभिः॥ मरुतः सदोहविर्धानाभ्यां॥ आपः प्रोक्षणीभिः॥

ओषधयो बर्हिषा॥ अदितिर्वेद्या॥ सोमो दीक्षया॥ १॥ त्वष्टेध्मेन॥ विष्णुर्यज्ञेन॥

वसव आज्येन॥ आदित्या दक्षिणाभिः॥ विश्वे देवा ऊर्जा॥ पूषा स्वगाकारेण॥

बृहस्पतिः पुरोधया॥ प्रजापतिरुद्गीथेन॥ अंतरिक्षं पवित्रेण॥ वायुः पात्रैः॥

अहं श्रद्धया॥ २॥ दीक्षया पात्रे रेकं च॥ ८॥ सेनेन्द्रस्य॥ धेना बृहस्पतेः॥

पथ्या पूष्णः॥ वाग्वायोः॥ दीक्षा सोमस्य॥ पृथिव्यग्नेः॥ वसूनां गायत्री॥ रुद्रा

णां त्रिष्टुक्॥ आदित्यानां जगती॥ विष्णोरनुष्टुक्॥ वरुणस्य विराट्॥ यज्ञ

अरण ॥४३॥

स्यपुष्टिः ॥ प्रजापतेरनुमतिः ॥ मित्रस्य श्रद्धा ॥ सवितुः प्रसूतिः ॥ सूर्यस्य म
रीचिः ॥ चंद्रमसो रोहिणी ॥ ऋषीणामरुंधती ॥ पर्जन्यस्य विद्युत् ॥ चतस्रो
दिशः ॥ चतस्रोवांतरदिशाः ॥ अहश्च रात्रिश्च ॥ कृषिश्च वृष्टिश्च ॥ त्विषिश्चा
पचितिश्च ॥ आपश्चौषधयश्च ॥ ऊर्क्च सूनृता च देवानां पत्नयः ॥ २ ॥ अनु
ष्टुप् दिशः षट् ॥ ९ ॥ देवस्य त्वा सवितुः प्रसवे ॥ अश्विनोर्बाहुभ्यां पूष्णो हस्ता
भ्यां प्रतिगृह्णामि ॥ राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यं ॥ तेना
मृतत्वमश्यां ॥ वयो दात्रे ॥ मयो मह्यमस्तु प्रतिग्रहीत्रे ॥ क इदं कस्मा अदा
त् ॥ कामः कामाय ॥ कामो दाता ॥ १ ॥ कामः प्रतिग्रहीता ॥ कामं समु
द्रमाविश ॥ कामेन त्वा प्रतिगृह्णामि ॥ कामैतत्ते ॥ एषा ते काम दक्षिणा ॥

॥४३॥

उत्तानस्त्वांगीरसः प्रतिगृह्णातु ॥ सोमाय वासः ॥ रुद्राय गां ॥ वरुणायाश्वं ॥ प्रजापतये
पुरुषं ॥ २ ॥ मनवे तल्पं ॥ त्वष्ट्रेऽजां ॥ पूष्णेऽविं ॥ निर्ऋत्या अश्वतरगर्दभौ ॥ हिमवतो ह
स्तिनं ॥ गंधर्वाप्सराभ्यः स्रगलंकरणे ॥ विश्वेभ्यो देवेभ्यो धान्यं ॥ वाचेन्नं ॥ ब्रह्मण
ओदनं ॥ समुद्रायापः ॥ ३ ॥ उत्तानायांगीरसायानः ॥ वैश्वानराय रथं ॥ [वैश्वानरः]
प्रत्नथा नाकमारुहत् ॥ दिवः पृष्ठं मंदमानः सुमन्मभिः ॥ स पूर्ववज्जनयज्जंतवे
धनं ॥ समानमज्मा परियाति जागृविः ॥ राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वान
राय रथं ॥ तेनामृतत्वमश्यां ॥ वयो दात्रे ॥ मयो मह्यमस्तु प्रतिग्रहीत्रे ॥ ४ ॥ क इदं
कस्मा अदात् ॥ कामः कामाय ॥ कामो दाता ॥ कामः प्रतिग्रहीता ॥ कामं समुद्र
माविश ॥ कामेन त्वा प्रतिगृह्णामि ॥ कामैतत्ते ॥ एषा ते काम दक्षिणा ॥ उत्तानस्त्वां

अरण ॥४४॥

गीरसः प्रत्ते गरुत्मतु॥५॥ दाता पुरुषु माप्यः प्रतिग्रही अनवच॥१०॥ सुवर्णचर्मप
रिवेदयुनं॥ इद्रस्यात्मानंदशधा चरंत॥ अंतः समुद्रे मनसा चरंतं॥ ब्रह्मान्वविंदद्द
होतारमर्णे॥ अंतः प्रविष्टः शास्ता जनानां॥९॥ कसन्बहुधा विचारः॥ शतंसुक्रो
णि यत्रैकं भवंति॥ सर्वे वेदा यत्रैकं भवंति॥ सर्वे होतारो यत्रैकं भवंति॥ समानंसी
न आत्मा जनानां॥ अंतः प्रविष्टः शास्ता जनानां॥२॥ सर्वात्मा॥ सर्वाः प्रजा यत्रैकं भवं
ति॥ चतुर्होतारो यत्र संपदं गच्छंति देवैः॥ ~~सर्वात्मा~~॥ समानंसी न आत्मा जनानां॥
ब्रह्मेंद्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिं॥ चतुर्होतारं प्रदि
शेनुक्लृप्तं॥ वाचो वीर्यं तपसान्वविंदत्॥ अंतः प्रविष्टं कर्तारमेतं॥ त्वष्टारं रूपा
णि विकुर्वंतं विपश्चिं॥२॥ अमृतस्य प्राणं यज्ञमेतं॥ चतुर्होतृणामात्मानं कु

२१ गो ॥४४॥

वयो नि चिक्युः ॥ अंतः प्रविष्टं कर्तारमेतं ॥ देवानां बंधु निहितं गुहासु ॥ अमृतेन क्लृ
प्तं यज्ञमेतं ॥ चतुर्होतृणामात्मानं कवयो नि चिक्युः ॥ शतं नियुतः परिवेद विश्वा वि
श्ववारः ॥ विश्वमिदं वृणाति ॥ इंद्रस्यात्मा निहितः पंचहोता ॥ अमृतं देवानामायुः प्र
जानां ॥ इंद्रꣳ राजानꣳ सवितारमेतं ॥ वायोरात्मानं कवयो नि चिक्युः ॥ रश्मिꣳ र
श्मीनां मध्ये तपंतं ॥ ऋतस्य पदे कवयो नि पांति ॥ य आंडकोशे भुवनं बिभर्ति ॥
अनिर्भिन्नः सन्नथ लोकान्विचष्टे ॥ यस्यांडकोशꣳ शुष्ममाहुः प्राणमुल्बं ॥ ते
न क्लृप्तोऽमृतेनाहमस्मि ॥ सुवर्णं कोशꣳ रजसा परीवृतं ॥ देवानां वसुधानीं वि
राजं ॥ ४ ॥ अमृतस्य पूर्णां तामु कलां विचक्षते ॥ पादꣳ षड्ढोतुर्न किलाविवित्से ॥
येनर्तवः पंचधोत क्लृप्ताः ॥ उत वा षड्धा मनसोत क्लृप्ताः ॥ तꣳ षड्ढोतारमृतुभिः

अरण

॥४५॥

कल्पमानं॥ऋतस्य पदे कवयो नि पांति॥अंतः प्रविष्टं कुतीरमेतं॥अंतश्चंद्रमसि मनसा चरंतं॥सहैव संतं न विजानंति देवाः॥इंद्रस्यात्मानं शतधा चरंतं॥ इंद्रो राजा जगतो य ईशे॥सप्तहोता सप्तधा विक्लृप्तः॥परेण तंतुं परिषिच्यमानं॥ अंतरादित्ये मनसा चरंतं॥देवानां हृदयं ब्रह्मान्वविंदत्॥ब्रह्मैतद् ब्रह्मण उज्जभार॥अर्कं श्च्योतंतं सरिरस्य मध्ये॥आ यस्मिन्त्सप्त पेरवः॥मेहंति बहुलां श्रियं॥बह्वश्वामिंद्र गोमतीं॥अच्युतां बहुलां श्रियं॥स हरिर्वसुवित्तमः॥ पेरुरिंद्राय पिन्वते॥बह्वश्वामिंद्र गोमतीं॥अच्युतां बहुलां श्रियं॥मह्यमिंद्रो नियच्छतु॥शतं शता अस्य युक्ता हरीणां॥अर्वाङायातु वसुभी रश्मिरिंद्रः॥ प्रमंहमानो बहुलां श्रियं॥रश्मिरिंद्रः सविता मे नियच्छतु॥७॥घृतं तेजो

॥४५॥

5

मधुमदिंद्रियं॥मध्यमग्निर्दधातु॥हरिः पतंगः पटरीसुपर्णः॥विक्षयोनभसाय दि ए ति॥सनइंद्रः कामवरंददातु॥पंचारंचक्रंपरिवर्त्ततेपृथु॥हिरण्यज्योतिः सरिरस्यमध्ये॥अजस्रंज्योतिर्नभसासर्पदेति॥सनइंद्रः कामवरंददातु॥सप्तयुंजंतिरथमेकचक्रं॥८॥एकोअश्वोवहतिसप्तनामा॥त्रिनाभिचक्रमजरमनर्वं॥येनेमाविश्वाभुवनानितस्थुः॥भद्रंपश्यंतउपसेदुरग्रे॥तपोदीक्षामृषयःसुवर्विदः॥ततःक्षत्रंबलमोजश्चजातं॥तदस्मैदेवाअभिसंनमंतु॥श्वेतंरश्मिंबोभुज्यमानं॥अपांनेतारंभुवनस्यगोपां॥इंद्रंनिचिक्युःपरमेव्योमन्॥९॥रोहिणीःपिंगलाएकरूपाः॥क्षरंतीःपिंगलाएकरूपाः॥शतंसहस्राणिप्रयुतानिनाव्यानां॥अयंयःश्वेतोरश्मिः॥परिसर्वमिदंजगत्॥प्रजांपशून्धनानि॥अस्माकंददातु॥श्वेतोरश्मिः परिसर्वंबभूव॥सुवन्महत्सप

अरण
॥४६॥

भून्विश्वरूपान्॥पतंगमक्तमसुरस्यमायया॥१०॥हृदापश्यंतिमनसामनीषिणः॥
समुद्रेअंतःकवयोविचक्षते॥मरीचीनांपदमिच्छंतिवेधसः॥पतंगोवाचंमनसाबिभर्ति॥
तांगंधर्वोवदद्गर्भेअंतः॥तांद्योतमानाꣳस्वर्यंमनीषां॥ऋतस्यपदेकवयोनिपांति॥
येग्राम्याःपशवोविश्वरूपाः॥विरूपाःसंतोबहुधैकरूपाः॥अग्निस्ताꣳअग्रेप्र
मुमोक्तुदेवः॥११॥प्रजापतिःप्रजयासंविदानः॥वीतꣳस्तुकेयुवमस्मासुनियच्छ
तं॥प्रप्रयज्ञपतिंतिर॥येग्राम्याःपशवोविश्वरूपाः॥विरूपाःसंतोबहुधैकरूपाः॥
तेषाꣳसप्तानामिहरंतिरस्तु॥रायस्पोषायसुप्रजास्त्वायसुवीर्याय॥यआरण्याः
पशवोविश्वरूपाः॥विरूपाःसंतोबहुधैकरूपाः॥१२॥वायुस्ताꣳअग्रेप्रमुमोक्तुदे ॥४६॥
वः॥प्रजापतिःप्रजयासंविदानः॥इडायैसृप्तंघृतवच्चराचरं॥देवाअन्वविंदन्गुहाहि

विरूपाः

तं ॥ यआरण्याः पशवो विश्वरूपाः ॥ संतो बहुधैकरूपाः ॥ तेषां सप्तानामिह रंति
रस्तु ॥ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ १३ ॥ आ मा जनो नां विकुर्वंतं विपश्चिं
प्रज्ञानो वसुधानी विराजं चरंतं गोमतीमु नियच्छ लेके च क व्योमन्मायया दिव एक
रूपा अष्टौ च ॥ ३३ ॥ सहस्रशीर्षा पुरुषः ॥ सहस्राक्षः सहस्रपात् ॥ स भूमिं विश्वतो वृत्वा ॥ अ
त्यतिष्ठद्दशांगुलं ॥ पुरुष एवेदं सर्वं ॥ यद्भूतं यच्च भव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्ने
नातिरोहति ॥ एतावानस्य महिमा ॥ अतो ज्यायांश्च पूरुषः ॥ ३ ॥ पादोस्य विश्वा भूता ज्या
नि ॥ त्रिपादस्यामृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततो विष्व
ङ्व्यक्रामत् ॥ साशनानशने अभि ॥ तस्माद्विराडजायत ॥ विराजो अधि पूरुषः ॥ स जा
तो अत्यरिच्यत ॥ पश्चाद्भूमिमथो पुरः ॥ यत्पुरुषेण हविषा ॥ देवा यज्ञमतन्वत ॥ वसं

अरण
॥४७॥

तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिः सप्त समिधः कृताः ॥
देवा यद्यज्ञं तन्वानाः ॥ अबध्नन्पुरुषं पशुं ॥ तं यज्ञं बर्हिषि प्रौक्षन् ॥ पुरुषं जातमग्रतः ॥३॥
तेन देवा अयजंत ॥ साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतं पृषदाज्यं ॥ प
शूंस्तांश्चक्रे वायव्यान् ॥ आरण्यान्ग्राम्याश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचः
सामानि जज्ञिरे ॥ छंदांसि जज्ञिरे तस्मात् ॥ यजुस्तस्मादजायत ॥ ४ ॥ तस्माद
श्वा अजायंत ॥ ये के चोभयादतः ॥ गावो ह जज्ञिरे तस्मात् ॥ तस्माज्जाता अजाव
यः ॥ यत्पुरुषं व्यदधुः ॥ कतिधा व्यकल्पयन् ॥ मुखं किमस्य कौ बाहू ॥ कावूरू पादावु
च्येते ॥ ब्राह्मणोऽस्य मुखमासीत् ॥ बाहू राजन्यः कृतः ॥ ५ ॥ ऊरू तदस्य यद्वैश्यः ॥ ॥४७॥
पद्भ्यां शूद्रो अजायत ॥ चंद्रमा मनसो जातः ॥ चक्षोः सूर्यो अजायत ॥ मुखा

दिंद्रश्चाग्निश्च॥प्राणाद्वायुरजायत॥नाभ्या आसीदंतरिक्षं॥शीर्ष्णो द्यौः समवर्तत॥प
द्भ्यां भूमिर्दिशः श्रोत्रात्॥तथा लोकाँ॥ अकल्पयन्॥वेदाहमेतं पुरुषं महांतं॥आदित्य
वर्णं तमसस्तु पारे॥सर्वाणि रूपाणि विचित्य धीरः॥नामानि कृत्वाभिवदन्यदास्ते॥
धाता पुरस्ताद्यमुदाजहार॥शक्रः प्रविद्वान्प्रदिशश्चतस्रः॥तमेवं विद्वानमृत इ
ह भवति॥नान्यः पंथा अयनाय विद्यते॥यज्ञेन यज्ञमयजंत देवाः॥तानि धर्मा
णि प्रथमान्यासन्॥ते ह नाकं महिमानः सचंते॥यत्र पूर्वे साध्याः संति देवाः॥७॥
पूरुषः पुरोग्रतोजायत कृत्स्नोकल्पयन्नासंद्वेच॥१२॥अद्भ्यः संभूतः पृथिव्यै रसा
च्च॥विश्वकर्मणः समवर्तताधि॥तस्य त्वष्टा विदधद्रूपमेति॥तत्पुरुषस्य विश्व द
माजानमग्रे॥वेदाहमेतं पुरुषं महांतं॥आदित्यवर्णं तमसः परस्तात्॥तमेवं वि

अरण ॥४८॥

द्वानमृत इह भवति ॥ नान्यः पंथा विद्यतेयनाय ॥ प्रजापतिश्चरति गर्भे अंतः ॥
अजायमानो बहुधा विजायते ॥१॥ तस्य धीराः परिजानंति योनिं ॥ मरीची
नां पदमिच्छंति वेधसः ॥ यो देवेभ्य आतपति ॥ यो देवानां पुरोहितः ॥ पूर्वो यो
देवेभ्यो जातः ॥ नमो रुचाय ब्राह्मये ॥ रुचं ब्राह्मं जनयंतः ॥ देवा अग्रे तदब्रुव
न् ॥ यस्त्वैवं ब्राह्मणो विद्यात् ॥ तस्य देवा असन्वशे ॥ ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ॥

त

अहोरात्रे पार्श्वे ॥ नक्षत्राणि रूपं ॥ अश्विनौ व्यात्तं ॥ इष्टं मनिषाण ॥ अमुं मनि
षाण ॥ सर्वं मनिषाण ॥२॥ जायते वशी सत्तचं ॥१३॥ मर्तो संक्रियमाणो बि
भर्ति ॥ एको देवो बहुधा निविष्टः ॥ यदा भारं तंद्रयते स भर्तुं ॥ निधाय भारं पु ॥४८॥
नरस्तमेति ॥ तमेव मृत्युममृतं तमाहुः ॥ तं भर्तारं तमु गोप्तारमाहुः ॥ सभृ

सो म्रियमाणो विभर्ति ॥ य एनं वेद सत्येन भर्तुं ॥ स यो जातस्मुल जहात्येषः ॥ उतो जरं
तुं न जहात्येकं ॥ १ ॥ उतो वृद्धं जहार ॥ अतं क्रो देवः सदमेव प्रार्थः ॥ यस्तद्वेद यत आबभूव ॥
संधां च यास्सं दधे ब्रह्मणैवः ॥ रमते तस्मिन्नुत जीर्णे शयाने ॥ नैनं जहात्यहःसु पूर्व्येषु ॥
त्वामापो अनुसर्वाश्चरन्ति जानतीः ॥ वत्सं पयसा पुनानाः ॥ त्वमग्निं हव्यवाहं स
मिन्त्से ॥ त्वं भर्ता मातरिश्वा प्रजानां ॥ २ ॥ त्वं यज्ञस्त्वमु वैवासि सोमः ॥ तव देवा हवमायन्ति
सर्वे ॥ त्वमेकोसि बहूननुप्रविष्टः ॥ नमस्ते अस्तु सुहवो म एधि ॥ नमो वामस्तु शृणुतं
हवं मे ॥ प्राणापानाव जिरं संचरन्तौ ॥ ह्वयामि वां ब्रह्मणा तूर्तमेतं ॥ यो मां द्वेष्टि तं जहि
तं युवाना ॥ प्राणापानौ संविदानौ जहितं ॥ अमुष्यासुना मा संगसाथां ॥ ३ ॥ तं मे दे
वा ब्रह्मणा संविदानौ [illegible] तं ॥ वधाय दत्तं तमहं हनामि ॥ असज्जजान सत आबभू

अरण
॥४१॥

व॥ यंयैजज्ञानसउँग्रेपोअस्य॥ यदाभारंतंद्रयतेसभर्तुं॥ परास्यभारंपुनरस्तमेति॥ त
द्वैतंप्राणोअभवः॥ महान्भोगैः प्रजापतेः॥ भुजः करिष्यमाणः॥ यद्देवान्प्राणयोनवं॥
॥४॥ एकंप्रजानांगसाथांनवं॥१४॥ हरिंहरंतमनुयंतिदेवाः॥ विश्वस्येशोनंर
षभंमतीनां॥ ब्रह्मसरूपमनुमेदमागात्॥ अयनंमाविवधीर्विक्रमस्व॥ माछिदो
मृत्योमावधीः॥ मामेबलंविवृहोमाप्रमोषीः॥ प्रजांमामेरीरिषआयुरुग्र॥ नृच
क्षसंत्वाहविषाविधेमस्वस्त्ययक्षमानाय॥ सुवेपानायसुत्यैवे॥१॥ मासुआशी
अशृण्वन्॥ कामेनाजनयन्पुनः॥ कामेनमेकामआगात्॥ हृदयाद्धृदयंमृत्योः॥
यदमीषामदः प्रियंतदैतूपमामभि॥ परंमृत्योअनुपरेहिपंथां॥ यस्तेस्वइतरो ॥५१॥
देवयानात्॥ चक्षुष्मतेशृण्वतेतेब्रवीमि॥ मानःप्रजांरीरिषोमोतवीरान्॥ मपू

व्यं मनसा वंदमानः ॥ नाधमानो वृषभं चर्षणीनां ॥ यः प्रजानामेकराण्मानुषीणां ॥
मृत्युं यजे प्रथमजामृतस्य ॥ २ मृत्यवे वीराः श्वस्त्वा रिच ॥ २५ तरणिर्विश्वदर्शतो ज्योति
ष्कृदसि सूर्य ॥ विश्वमाभासि रोचनं ॥ उपयामगृहीतोसि सूर्याय त्वा भ्राजस्वत एषते
योनिः सूर्याय त्वा भ्राजस्वते ॥ १ ॥ तरणिस्त्रीणि ॥ १६ ॥ आप्यायस्व मदिंतम सोम
विश्वेभिरूतिभिः ॥ भवा नः सुप्रथस्तमः ॥ १ ॥ आप्यायस्व द्वे ॥ १७ ॥ ईयुष्टे ये पूर्वत
रामपश्यन्व्युच्छंतीमुषसं मर्त्यासः ॥ अस्माभिरूनु प्रतिचक्ष्याभूदो ते यंति ये अ
परीषु पश्यान् ॥ १ ॥ ईयुष्टे द्वे ॥ १८ ॥ ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा साद
यामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलंतीं त्वा सादयामि मल्म
लाभवंतीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यज

जाग्यै।तीत्वासादयामि

अरप शांत्वासादयामिवृहज्योतिषंत्वासादयामिबोधयंतींत्वासादयामि॥१॥मयासाय

॥५०॥ स्वाहायासायस्वाहावियासायस्वाहासंयासायस्वाहोद्यासायस्वाहावयासाय

स्वाहाशुचेस्वाहाशोकायस्वाहातप्यत्वेस्वाहातपतेस्वाहाब्रह्महत्यायैस्वाहासर्वे

स्मैस्वाहा॥३॥चित्तंसंतानेनभवंयक्नारुद्रंतनिम्नापशुपतिंस्थूलहृदयेना

ग्निंहृदयेनरुद्रंलोहितेनशर्वमतस्नाभ्यांमहादेवमंतःपार्श्वेनोषिष्ठहनंशि

गीनिकोश्याभ्यां॥ ॥१॥ज्योतिष्मतीमयासायचित्तमेकमेकं॥ ॥२९॥

चित्तिःपृथिव्यग्निःसूर्यंतेचक्षुर्महाहविर्हीतावाग्योतोब्राह्मणएकहोताग्नि

र्यजुर्भिःसेनेंद्रस्यदेवस्यसुवर्णवर्मंसहस्रशीर्षाप्रमतोहरितरणिरप्वी ॥५०॥

यस्ययुष्टयेज्योतिष्मतीमयासायचित्तमेकविंशतिः॥ ॥चित्ति

रुग्नियंज्ञुर्भिरंतः प्रविष्टः प्रजापतिः प्रजयासंसंरराणस्त्रीणिज्योतीषिसचते सषोडशी ॥ ५१ ॥ ओं यस्मान्नजातः परोअन्योअस्ति य आविवेश भुवनानि विश्वा प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ॥

रुग्निर्यज्ञुर्भिरंतः प्रविष्टः प्रजापतिः प्रजयासंस्न्वयासायद्विंचाशात् ॥ ॥५२॥ ॥हरिः ओम् ॥ तच्छंयोरावृणीमहे ॥ गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीः स्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शन्नोअस्तुद्विपदे ॥ शं चतुष्पदे ॥ ओं शांतिः शांतिः शांतिः ॥ ॥

ॐ ॥ नमो नु मदन्तु ॥ ॐ शान्तिः ३ ॥

श्रीगणेशाय नमः ॥ हरिः ओम् ॥ नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मंत्रकृद्भ्यो मंत्रपतिभ्यो मा माम् ऋषयो मंत्रकृतो मंत्रपतयः परादुर्माहम् ऋषीन्मंत्रकृतो मंत्रपतीन्परादां वैश्वदेवीं वाचमुद्यासं शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चंद्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं

प्ररण० ॥५२॥

र्स्पुश्नुषेण्यामनुष्येभ्यः स्त्वंमादेवा अवंतुशोभायैपितरोनुमदंतु ॥ ओं शांतिः शां
तिः शांतिः ॥ ओं ॥ युंजतेमनउतयुंजतेधियः । विप्राविप्रस्यबृहतोविपश्चितः ॥
विहोत्रादधेवयुनाविदेकइत् । महीदेवस्यसवितुःपरिष्टुतिः । देवस्यत्वासवि
तुःप्रसवे । अश्विनोर्बाहुभ्यां । पूष्णोहस्ताभ्यामाददे ॥ अभ्रिरसिनारिरसि ॥
अध्वरकृदेवेभ्यः । उत्तिष्ठब्रह्मणस्पते ॥ १ ॥ देवयंतस्त्वेमहे । उपप्रयंतुम
रुतःसुदानवः । इंद्रप्राशूर्भवासचा । प्रैतुब्रह्मणस्पतिः ॥ प्रदेव्येतुसूनृता ।
अछावीरंनर्यंपंक्तिराधसं । देवायज्ञंनयंतुनः । देवीद्यावापृथिवीअनुमेमंस्
साथां ॥ ऋध्यासमद्य । मखस्यशिरः ॥ २ ॥ मखायत्वा । मखस्यत्वाशीर्ष्णे । ॥५२॥
इयत्यग्रआसीः । ऋध्यासमद्य । मखस्यशिरः । मखायत्वा । मखस्यत्वाशीर्ष्णे ।

देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः॥ ऋध्यासमद्य। मखस्य शिरः॥ ३॥
मखाय त्वा। मखस्य त्वा शीर्ष्णे। इंद्रस्यौजोसि। ऋध्यासमद्य। मखस्य शिरः। मखा
य त्वा। मखस्य त्वा शीर्ष्णे। अग्निजा असि प्रजापते रेतः। ऋध्यासमद्य। मख
स्य शिरः॥ ४॥ मखाय त्वा। मखस्य त्वा शीर्ष्णे। आयुर्धेहि प्राणं धेहि। अपानं
धेहि व्यानं धेहि। चक्षुर्धेहि श्रोत्रं धेहि। मनो धेहि वाचं धेहि। आत्मानं धेहि प्र
तिष्ठां धेहि। मां धेहि मयि धेहि। मधु त्वा मधुला करोतु। मखस्य शिरोसि॥ ५॥
यज्ञस्य पदे स्थः। गायत्रेण त्वा छंदसा करोमि। त्रैष्टुभेन त्वा छंदसा करोमि। जाग
तेन त्वा छंदसा करोमि। मखस्य रास्नासि। अदितिस्ते बिलं गृह्णातु। पांक्तेन छंद
सा। सूर्यस्य हरसा श्राय। मखोसि॥ ६॥ प्रैतु शिर ऋतावरी ऋध्यासमद्य म

अर० स्वस्युशिरः शिरः शिरो स्मिन पंच ॥१॥ इयन्तीः देवी रिंदु स्योजो स्यग्नि जा अस्यायु

॥५३॥ धेहि प्राणं पं चे ॥ दृष्टो अग्ने स्य निष्पदसि। वरुणस्त्वा धृतव्रतु आ धूपयतु॥ मित्रावरुणयो ध्रुवेण धर्मणा॥ अर्चिषे त्वा। शोचिषे त्वा। ज्योतिषे त्वा। तपसे त्वा। अग्नीमं महिना दिवं। मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीं ॥१॥ मित्रस्य चर्षणीधृतेः श्रवो देवस्य सानसिं। द्युम्नं चित्रश्रवस्तमं। सिध्यै त्वा। देवस्त्वा सविता उद्वपतु। सुपाणिः स्वंगुरिः। सुबाहुरुत शक्त्या। अपद्यमानः पृथिव्यां। आशा दिश आपृण। उत्तिष्ठ बृहन् भव॥ ऊर्ध्वस्तिष्ठ ध्रुवस्त्वं। सूर्यस्य त्वा चक्षुषान्वीक्षे॥ ऋजवे त्वा। साधवे त्वा। सुक्षित्यै त्वा। भूत्यै त्वा। इदमहम् ॥५४॥ अमुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि। गायत्रेण त्वा छन्दसा

छृणद्मि । त्रैष्टुभेन त्वा छन्दसा छृणद्मि । जागतेन त्वा छन्दसा छृणद्मि । छृणत्तु त्वा
वाक् । छृणत्तु त्वोर्क् । छृणत्तु त्वा हविः । छृन्धि वाचं । छृन्ध्यूर्जं । छृन्धि हविः । देव पुरश्च
र सघ्यासं त्वा ॥ ३ ॥ पृथिवी भवद्वाक्ष्यद्व ॥ ३ ॥ ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः । हो
तर्घर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर ।
प्रस्तोतः सामानि गाय । यजुर्युक्तं सामभिराक्तखं त्वा । विश्वेदेवैरनुमतं म
रुद्भिः । दक्षिणाभिः प्रततं पारयिष्णु । स्तुभो वहन्तु सुमनस्यमानं । स नो रुचं
धेह्यहृणीयमानः । भूर्भुवः सुवः । ओमिन्द्रवन्तः प्रचरत ॥ ३ ॥ अहृणीयमानो
देवेः ॥ ४ ॥ ब्रह्मन्प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । यमाय त्वा मखाय त्वा ।
सूर्यस्य हरसे त्वा ॥ प्राणाय स्वाहा व्यानाय स्वाहा पानाय स्वाहा ॥ चक्षुषे स्वा

अर० हा। प्राणाय स्वाहा। मनसे स्वाहा। वाचे सरस्वत्यै स्वाहा। दक्षाय स्वाहा। क्रतवे स्वाहा। ॥३॥
॥५४॥ ओजसे स्वाहा। बलाय स्वाहा। देवस्य त्वा सवितुः ० ॥१॥ पृथिवी तपसस्त्रा
यस्व। अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि। संसीदस्व महाँ२ असि। शो
चस्व देववीतमः। विधूममग्ने अरुषम्मियेध्य। सृज प्रशस्त दर्शतम्। अञ्जन्ति यं
प्रथयन्तो न विप्राः। वपावन्तं नाग्निना तपन्तः। पितुर्न पुत्र उपसि प्रेष्ठः। आघ
र्मो अग्निमृतयन्नसादीत् ॥२॥ अनाधृष्या पुरस्तात्। अग्नेराधिपत्ये। आ
युर्मे दाः। पुत्रवती दक्षिणतः। इन्द्रस्याधिपत्ये। प्रजां मे दाः। सुषदा पश्चात्।
देवस्य सवितुराधिपत्ये। प्राणं मे दाः। आश्रुतिरुत्तरतः ॥३॥ मित्रावरुणयोरा
धिपत्ये। श्रोत्रं मे दाः। विधृतिरुपरिष्टात्। बृहस्पतेराधिपत्ये। ब्रह्म मे दाः क्ष ॥५५॥

त्रं मे दाः। तेजोऽसि मे धाव वर्चोऽसि मे धाः। यज्ञोऽसि मे धास्तपोऽसि मे धाः। मनोऽसि मे धाः। मनोर
श्वोऽसि भूरिपुत्रा। विश्वाभ्यो मा नाष्ट्राभ्यः पाहि॥४॥ सूपसदा मे भूया मा मा हि
ꣳसीः। तपोष्वग्ने अंतराँ अमित्रान्। तपा शꣳसमररुषः परस्य। तपा वसो
चिकितानो अचित्तान्। वितेतिष्ठंतामजरा अयासः॥ चितस्थ परिचितः। स्वा
हा मरुद्भिः परिश्रयस्व। मा असि। प्रमा असि। प्रतिमा असि॥५॥ संमा असि।
विमा असि। उन्मा असि। अंतरिक्षस्यांतर्धिरसि। दिवं तपसस्त्रायस्व। आभि
र्गीर्भिर्यदतो न ऊनं। आप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रु
जासि। भूयिष्ठभाजो अध ते स्याम। शुक्रं ते अन्यद्यजतं ते अन्यत्॥६॥ वि
षुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावः। भद्रा ते पूषन्निह

-ध्रुव

अन· रातिरंस्कः। अर्हे न्विभर्षि सायकानि धन्व। अर्हे न्निष्कं यजतं विश्वरूपं। अर्हे न्निदं
॥५५॥ दयसे विश्वमभ्रुवं। नवा ओजीयो रुद्रत्वदस्ति। गायत्रमसि। त्रैष्टुभमसि। जागत
मसि। मधुमधुमधु ॥७॥ अनुकुसादीदुतूरतःपोहि भतिमा ओसियजन्तेअ
त न्यज्जागृसस्यकं च ॥८॥ दक्षाप्राचीर्दशंभासिदक्षिणा। दक्षाप्रतीचीर्दशंभा
स्युदीचीः। दक्षोर्ध्वाभासि रुमनुस्यमानः। सनोरुचेधेस्यहृणीयमानः। अग्नि
स्त्वावसुभिः पुरस्ताद्रोचयतु गायत्रेणछंदसा। समारुचितोरोचय। इंद्रस्त्वा
रुद्रैर्दक्षिणतोरोचयतु त्रैष्टुभेन छंदसा। समारुचितोरोचय। वरुणस्त्वादित्यैःप
श्चाद्रोचयतु जागतेनछंदसा। समारुचितोरोचय ॥९॥ द्युतानस्त्वामारुतोम
रुद्भिरुत्तरतोरोचयतु आनुष्टुभेन छंदसा। समारुचितोरोचय। बृहस्पतिस्त्वा ॥५५॥

वै

विश्वैर्देवैरुपरिष्टाद्रोचयन्तु पाङ्क्तेन छन्दसा। सम्राड्रुचितो रोचय। रोचितस्त्वं देव घर्म दे
वेष्वसि। रोचिषीयाहं मनुष्येषु। सम्राड्घर्म रुचितस्त्वं देवेष्वायुष्मांस्तेजस्वी ब्रह्म
वर्चस्यसि। रुचितोहं मनुष्येष्वायुष्मांस्तेजस्वी ब्रह्मवर्चसी भूयासं। रुगसि।
रुचं मयि धेहि॥ २॥ मयि रुक्। दश पुरस्ताद्रोचसे। दशो दक्षिणा। दश प्रत्य
ङ्। दशोदङ्। दशोर्ध्वो भासि सुमनस्यमानः। स नः सम्राडिषमूर्जं धेहि। वाजी
वाजिने पवस्व। रोचितो घर्मो रुचीय॥ ३॥ ऐ चय धेहि नवं च॥ ४॥ अपश्यं गो
पामनिपद्यमानं। आ च परा च पथिभिश्चरन्तं। स सध्रीचीः स विषूचीर्वसानः।
आ वरीवर्ति भुवनेष्वन्तः। अत्र प्रावीः। मधुमाध्वीभ्यां मधुमाधूचीभ्यां। अ
नु वां देववीतये। समग्निरग्निना गत। सं दैवेन सवित्रा। सं सूर्येण रोचते॥ १॥

अर०　स्वाहासमग्निस्तपसागत। संदेवेनसवित्रा। सꣳसूर्येणारोचिष्ट। धर्त्ता दिवो
॥५६॥ विभासिरजसः। पृथिव्या धर्त्ता। उरोरन्तरिक्षस्य धर्त्ता। धर्त्ता देवो देवानां। अ
मर्त्यस्तपोजाः। हृदे त्वा मनसे त्वा। दिवे त्वा सूर्याय त्वा॥ ऊर्ध्वमिममध्वरं
कृधि। दिवि देवेषु होत्रा यच्छ। विश्वासां भुवां पते। विश्वस्य भुवनस्पते। वि
स　श्वस्य मनस्पते। विश्वस्य वचसस्पते। विश्वस्य तपसस्पते। विश्वस्य ब्रह्मण
स्पते। देवश्रूस्त्वं देव घर्म देवान्पाहि। तपोजां वाचमस्मे नियच्छ देवायुवं॥ अ
गर्भो देवानां। पिता मतीनां। पतिः प्रजानां। मतिः कवीनां। संदेवो देवेन सवि
त्रा यतिष्ट। सꣳसूर्येणारुक्त। आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि। पिता
नोसि पिता नो बोध। आयुर्धास्तनूधाः पयोधाः। वर्चोदा वरिवोदा द्रविणो ॥५६

दाः॥४॥अंतरिक्षमुरोर्वीयान्।अग्नीमहित्वामामाहिंसीः।त्वमग्नेगृ
हपतिर्विशामसि।विश्वासांमानुषीणां।शतंपूर्भिर्यविष्ठपाह्यंहसः।समे
द्धारंशतंहिमाः।तंद्राविणंहार्दिवानं।इहैवरातयःसंतु।त्वष्टीमतीने
सपेय।सूरेतारेतोदधाना।वीरंविदेयतवसंदृशि।माहंरायस्पोषेणवि
योषं॥५॥रोचतेसूर्योयत्वादेवायुवंद्रविणोदादधानादूचे॥७॥देवस्य
त्वासवितुःप्रसवे।अश्विनोर्बाहुभ्यां।पूष्णोहस्ताभ्यामाददे।अदित्यैरास्नासि।
इडएहि।सरस्वत्येहि।असावेहि।असावेहि।असावेहि॥१॥अदित्याउष्णी
षमसि।वायुरस्येडः।पूषात्वोपावसृजतु।अश्विभ्यांप्रदापय।यस्तेस्तनःश
शयोयोमयोभूः।येनविश्वापुष्यसिवार्याणि।योरत्नधावसुविद्यःसुदत्रः।

अर्दितस्महि

अर॰ सरस्वति तमिह धातवेकः। उरुव्यचा घर्मं ऽ शि्ँ ष। उरुव्यचा घर्मं पाहि ॥ ५ ॥ घर्मोय
॥५७॥ शिं ष। बृहस्पतिस्त्वोपसीदतु। दानवः स्थपेरवः। विष्वगृस्तो लोहितेन। अ
श्विभ्यां पिन्वस्व। सरस्वत्यै पिन्वस्व। पूष्णे पिन्वस्व। बृहस्पतये पिन्वस्व। इन्द्राय
पिन्वस्व। इन्द्राय पिन्वस्व ॥ ३ ॥ गायत्रोसि। त्रैष्टुभोसि। जागतमसि। सहो
र्जोभागेनोपमेहि। इन्द्राश्विना मधुनः सारघस्य। घर्मंपात वसवो यजता वट्।
स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि। मधु हविरसि। सूर्यस्य तपस्तप।
द्यावापृथिवीभ्यां त्वा परिगृह्णामि ॥ ६ ॥ अन्तरिक्षेण त्वोपयच्छामि। देवानां त्वा
पितॄणामनुमतो भर्तुं ऽ शकेयं। तेजोसि। तेजोनुप्रेहि। दिविस्पृगन्त्वा मा हिं ऽ
सीः। पृथिविस्पृगन्त्वा मा हिं ऽ सीः। स्ववरसि स्ववर्मे यच्छ। दिवं मे यच्छ दिवो मा ॥५७॥
पाहि ॥ ५ ॥ रुद्रेहि पाहि पिन्वस्व गृह्णामिन्नवेच ॥ ८ ॥ समुद्राय त्वा वाताय स्वाहा।

अंतरिक्षस्पृगन्त्वा मा हिंसीः।

त्वा

सलिलाय त्वा वातायस्वाहा। अनाधृष्टाय त्वा वातायस्वाहा। अप्रतिधृष्याय त्वा वातायस्वाहा। अवस्यवे त्वा वातायस्वाहा। दुवस्वते त्वा वातायस्वाहा। शिमिद्वते त्वा वातायस्वाहा। अग्नये त्वा वसुमते स्वाहा। सोमाय त्वा रुद्रवते स्वाहा। वरुणाय त्वादित्यवते स्वाहा॥१॥ बृहस्पतये त्वा विश्वदेव्यावते स्वाहा। सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा। यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। विश्वा आशा दक्षिणसत्। विश्वान्देवानयाडिह। स्वाहाकृतस्य घर्मस्य। मधोः पिबतमश्विना। स्वाहाग्नये यज्ञियाय। शं यजुर्भिः। अश्विना घर्मं पातं हार्द्दिवानं॥२॥ अहर्दिवाभिरूतिभिः। अनु वां द्यावापृथिवी मंसाताम्। स्वाहेन्द्राय। स्वाहेन्द्रावट्। घर्ममपातमश्विना हार्द्दिवानं। अहर्दिवाभिरूतिभिः। अनु

अ२॰ वां द्यावा पृथिवी अमः सा तां । तं प्राव्यं यथावट् । नमो दिवे । नमः पृथिव्यै । दिवि
॥५९ धाइमं यज्ञं । यज्ञमिमं दिवि धाः । दिवं गच्छ । अंतरिक्षं गच्छ । पृथिवीं गच्छ । पंच
प्रदिशो गच्छ । देवान्घर्मपा नो च्छ । पितॄन्घर्मपा नो च्छ ॥ ३ ॥ आदित्य वंतु स्त्वा हृ
हार्दिवानं पृथिव्या अष्टोन्वं ॥ ६ ॥ इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि ।
हि॰ ह क्षत्राय पीपि॰ । अद्भ्यः पीपि॰ । ओषधीभ्यः पीपि॰ । वनस्पतिभ्यः पीपिहि । द्यावा हि
पृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि ॥ ३ ॥ यजमाना
य पीपिहि । मह्यं ज्यैष्ठ्याय पीपिहि । त्विष्यै त्वा । द्युम्नाय त्वा । इंद्रियाय त्वा भू
त्यै त्वा । धर्मासि सुधर्मामेन्यस्मे । ब्रह्माणि धारय । क्षत्राणि धारय । विशो धा
रय । नेत्वा वातः स्कंदया त । अमुष्य त्वा प्राणे सादयामि । अमुना सह निरर्थं ॥५९

॥ २ ॥

गच्छ। योस्मान्द्वेष्टि। यं च वयं द्विष्मः। पूषेऽ ग्रारसेस्वाहा॥ ग्रावेभ्यः स्वाहा॥
प्रतिरेभ्यः स्वाहा। द्यावापृथिवीभ्यां स्वाहा। पितृभ्यो घर्मपेभ्यः स्वाहा। रुद्रा
य रुद्रहोत्रे स्वाहा॥ ३॥ अहर्ज्योतिः केतुनाजुषतां। सुज्योतिर्ज्योतिषां स्वाहा।
रात्रिर्ज्योतिः केतुनाजुषतां। सुज्योतिर्ज्योतिषां स्वाहा। अपीपरो माह्नो रात्रि
यै मापाहि। एषा ते अग्ने समित्। तया समिध्यस्व। आयुर्मे दाः। वर्चसा मांजीः।
अपीपरो मा रात्रिया अह्नो मापाहि॥ ४॥ एषा ते अग्ने समित्। तया समिध्य
स्व। आयुर्मे दाः। वर्चसा मांजीः। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा। सूर्यो ज्यो
तिर्ज्योतिः सूर्यः स्वाहा। भूः स्वाहा। हुतं हविः। मधु हविः। इंद्रतमेग्नौ। पिता
नोसि मा मा हिंसीः। अश्याम ते देव घर्म। मधुमतो वाजवतः पितुमतः। अं

२०  गिरस्वत्तः स्वधाविनः। अश्वी नहिंत्वा ॥ मा हिंऽसीः। स्वाहा त्वा सूर्यस्य रश्मिभ्यः।
॥५९॥ स्वाहा त्वा नक्षत्रेभ्यः॥८॥ अनु वर्चः॥ यपीपिहिस्कुद्यां दुह्यां ये रुद्रहे त्रे स्वा
हा ह्रैं मा पाहि गोसत्तन्व ॥१०॥ घर्म या ते दिवि शुक्। या गायत्रे छंदसि। या ब्रा
ह्मणे। या हविर्धाने। तां त एतेनाव यजु स्वाहा। घर्म या ते अंतरिक्षे शुक्। या त्रैष्टुभे
छंदसि। या राजन्ये। या आग्नीध्रे। तां त एतेनाव यजे स्वाहा॥११॥ घर्म या ते पृथि
व्याऽऽशुक्। या जागते छंदसि। या वैश्ये। या सदसि। तां त एतेनाव यजे स्वाहा।
अनु नो द्यानुमतिः। अग्निश्च हव्यं। दिवस्त्वा परस्यायाः। अंतरिक्षस्य तनु
वः पाहि। पृथिव्यास्त्वा धर्मणा ॥१२॥ वयमनुक्रामाम सुवितायनव्यसे। ब्र  ॥५९॥
ह्मणस्त्वा परस्यायाः॥ क्षत्रस्य तनुवः पाहि। विशस्त्वा धर्मणा। वयमनुक्रामा

मसुवितायनव्यसे। प्राणस्यत्वापरस्पायै। चक्षुषस्तनुवःपाहि। श्रोत्रस्यत्वाध
र्मणा। वयमनुक्रामामसुवितायनव्यसे। वल्गुरसिशंयुधायाः॥ ३॥ शिशुर्ज
नधायाः। शंचवक्षिपरिचवक्षि। चतुःस्रक्तिर्नाभिर्ऋतस्य। सदोविश्वायुः शर
र्मसप्रथाः। अपद्वेषोअपह्वरः। अन्यद्व्रतस्यसश्चिम। घर्मैतत्तेन्नमेतत्पुरीषं।
तेनवर्धस्वचाचप्यायस्व। वर्धिषीमहिचवयं। आचप्यासिषीमहि॥ ४॥
रन्तिर्नामासिदिव्योगन्धर्वः। तस्यतेपद्वद्धविर्धानं। अग्निरध्यक्षाः। रुद्रोधि
पतिः। समहमायुषा। संप्राणेन। संवर्चसा। संपयसा। संगोपत्येन। संरा
यस्पोषेण॥ ५॥ व्यसौ। योस्मान्द्वेष्टि। यंचवयंद्विष्मः। आचिक्रदद्वृषाहरिः।
महान्मित्रोनदर्शतः। संसूर्येणरोचते। चिदसिसमुद्रयोनिः। इन्दुर्दक्षः श्येन

र॰ ।।६०।।

नक्षत्रं वा। हिरण्यपक्षः शकुनो भुरण्युः।। अन्तरिक्षे ध्रुव आनिषत्तः।। दि॰ नमस्ते अस्तु मा मा हिंसीः।। विश्वावसुं सोमगन्धर्वं। आपो ददृशुषीः। तदृतेना व्यायन्। तदन्ववैत्। इन्द्रो रारहाण आसां। परि सूर्यस्य परिधींरपश्यत्। विश्वावसुरभि तन्नो गृणातु। दिव्यो गन्धर्वो रजसो विमानः। यद्वा घा सत्यमुत यन्न विद्म।।७।। धियो हिन्वानो धिय इन्नो अव्यात्। स सक्निमविन्दच्चरणे नदीनां। अपावृणोद्दुरो अश्मव्रजानां। प्रासां गन्धर्वो अमृतानि वोचत्। इन्द्रो दक्षं परिजानादहीनं। एतत्त्वं देव घर्म देवो देवानुपागाः। इदमहं मनुष्यो मनुष्यान्। सोमपीथानु मेहि। सह प्रजया सह रायस्पोषेण। सुमित्रा न आप ओषधयः सन्तु। दुर्मित्रास्तस्मै भूयासुः। योऽस्मान्द्वेष्टि। ।।६०।।

मू

यं त्वं वयं द्विष्मः। उद्वयं तमसस्परि। उदु त्यं चित्रं। इममूषु त्यमस्मभ्यं ऽस
निं। गायत्रं नवीयाऽंसं। अग्ने देवेषु प्रवोचः॥५॥ याग्नौ घर्मे तां तऽएतेनावय
जे स्वाहा धर्मणा वायुधायाः प्पाशिषीमहि पोषेण निषक्तो विद्यसं त्वष्टेन्द
॥११॥ महीनां पयोसि विहितं देवत्रा। ज्योतिर्भा असि वनस्पतीनामोषधी
नाऽंरसः। वाजिनं त्वा वाजिनोवनयामः। ऊर्ध्वं मनः सुवर्गं॥१॥ अस्कान्द्यौः पृ
थिवीं। अस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना। स्कन्नो यज्ञः प्रजन
यतु। अस्कानजनि प्राजनि। आस्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषी
महि॥१३॥ या पुरस्ताद्विद्युदापतत्। तां तऽएतेनावयजे स्वाहा। या दक्षि
णतः। या पश्चात्। योत्तरतः। योपरिष्टाद्विद्युदापतत्। तां तऽएतेनावयजे

स्वाहा ॥ २४ ॥ प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा ॥ मनसे स्वाहा वाचे सरस्वत्यै स्वाहा ॥ २५ ॥ पूष्णे स्वाहा पूष्णे शरसे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा । पूष्णे घृणये स्वाहा पूष्णे नरुणाय स्वाहा । पूष्णे साकृताय स्वाहा ॥ २६ ॥ उदस्य शुष्मो भानुर्नार्त बिभर्ति । भारं पृथिवी न भूम । प्र शुक्रैतु देवी मनीषा । अस्मत्सुतष्टो रथो न वाजी । अर्चन्त एके महि साम मन्वत । तेन सूर्यमधारयन् । तेन सूर्यमरोचयन् । घर्मः शिरस्तदयमग्निः । पुरीषमसि संप्रियं प्रजया पशुभिर्भुवत् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २७ ॥ यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः । ये ते अग्न इन्दवो या उ नाभयः । यास्ते अग्ने तनुव ऊर्जो नाम । ताभिस्त्वमुभयीभिः संविदानः । प्रजा

भिरग्ने द्रविणेहसीद। प्रजापतिस्त्वासादयतु। तयादेवतयांगिरस्वद्ध्रुवासीद॥१८॥
अग्निरसि वैश्वानरोसि। संवत्सरोसि परिवत्सरोसि। इदावत्सरोसीदुवत्सरोसि। इ
द्वत्सरोसि वत्सरोसि। तस्यते वसंतः शिरः। ग्रीष्मोदक्षिणः पक्षः। वर्षाः पुच्छं। शरदुत्तरः प
क्षः। हेमंतोमध्यं। पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषं। अहोरात्राणीष्टकाः। तस्यं
ते मासाश्चार्धमासाश्च कल्पंतां। ऋतवस्ते कल्पंतां। संवत्सरस्ते कल्पतां। अहोरा
त्राणि ते कल्पंतां। एति प्रेति वीति समितुदेति। प्रजापतिस्त्वासादयतु। तयादेवत
यांगिरस्वद्ध्रुवासीद॥१९॥ भूर्भुवः स्वः। ऊर्ध्वे उषुणऊतये। ऊर्ध्वोनःपाह्यं
हसः। विधुंदद्राणंसमने बहूनां॥ युवानंसंतंपलितोजगार। देवस्यपश्य
काव्यं महित्वाद्यामममार। सद्यःसमान। यद्दत्तेचिंदभिश्रिषः। पुराजत्रेभ्यआत

दः। संधा तासंधिंमघवांपुरो वसः। निष्कर्तीविहुतंपुनः। पुनरूर्जासहरय्या। मानो

घर्मव्यथितोविव्यथोनः। मानःपरमधरंमारजोनैः। मोषस्मांस्तमसेस्यंतराधाः। मा

रुद्रियासोअभिगुर्वृधानः। मानःक्रतुभिर्हीडितेभिरस्मान्। द्विषासुनीतेमाप

रीराः। मानोरुद्रोनिर्ऋतिर्मानोअस्ता। माद्यावापृथिवीहीडिषातां॥२॥ उपनो

मित्रावरुणाविहावतं। अन्वादीध्यांमिहनःसखाया। आदित्यानांप्रसितिर्हेतिः।

उग्राशतापाष्ठाघविषापरिणोवृणक्तु। इमंमेवरुणतत्त्वायामि। त्वन्नोअग्नेस

त्वन्नो। त्वमग्नेअयासि। उदुत्यं। तमसस्परि। उदुत्यं चित्रं। वयःसुपर्णाः॥३॥

पुरोवसुर्हीडिषानांसुपर्णाः॥२०॥ भूर्भुवःसुवः। मय्यग्निस्सदिंद्रियंमहन्नू।

मायिंद्रस्सोमयिक्रतुः। मयिधायिसुवीर्यं। त्रिशुग्घर्मोविभातुमे। आकूत्यामनसा ॥६२॥

सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह । सत्येन तपसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि ॥ २१ ॥ [illegible]

अग्ने

यास्ते घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥ २२ ॥ स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । यो ऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥ २३ ॥ धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च । निलिम्पश्च विलिम्पश्च विक्षिपः ॥ २४ ॥ उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च ।

सहस्रसह्मा ऽभ्वसहमानमभ्भुसहस्वाः ऽभ्भुसहीयाः ऽभ्व । एसंप्रेयं विक्षिपः ॥ २५ ॥ अ
होरात्रेसोर्हीरयतां । अर्धमासास्त्वोर्दीजयंनु । मासास्त्वाश्रपयंतु । ऋतवस्त्वापचं
तु । संवत्सरस्त्वाहंत्वसो ॥ २६ ॥ खट्फड्जहि । छिंधी भिंधी हुं धीकद्द । इतिवाचः कू
राणि ॥ २७ ॥ विगाईडविनरंत्स्या न्नायस्व । स्वपंतमिंद्र पशुमंतमिच्छ । वज्रेणामुं
बोधयदुर्विंदत्रं । स्वपतोस्य प्रहर भोजनेभ्यः । अग्ने अग्निनासंवदस्व । मृत्योमृ
त्युनासंवदस्व । नमस्ते अस्तुभगवः । सकृत्ते अग्नेनमः । द्विस्तेनमः । त्रिस्तेनमः ।
चतुस्तेनमः । पंचकृत्वस्तेनमः । दशकृत्वस्ते नमः । शतकृत्वस्तेनमः । आसह
स्रकृत्वस्तेनमः । अपरिमितकृत्वस्तेनमः । नमस्ते अस्तुमामाहिंसीः ॥ २८ ॥
असृङ्मुखोरुधिरेणाव्यक्तः । यमस्यदूतः श्वपाद्विधावसि । गृध्रः सुपर्णः कु

त्रिस्तेनमः सप्त

CC-0. Mrugendra Vinod Collection. Digitized by eGangotri

णपंन्निषेवसे। युमस्यंदूतः प्रहितोभुवस्यंचोभयोः॥ २९॥ यद्दूतदूकू सोभूत्वा। वा गेद्व्याभिरायसि। द्विषंतेमे भिरोय। तंमरेसामृसवेनय। स आर्तिमामाछेतु॥ ३०॥ यदीषितोयदिवास्वकामी। भयेडकोवदंतिवाचमेतां। तामिंद्राग्नी ब्रह्मणासं विदानौ। शिवामस्मभ्यंकृणुतं गृहेषु॥ ३१॥ दीर्घमुखदुर्हणु। मास्मदक्षि णतोवदः। यदिदक्षिणतोवद्राद्विषंतंमे वाधासे॥ ३२॥ इत्थादुलूकू आपप्तत। हिरण्याक्षो अयोमुखः। रक्षसांदूतआगतः। तमितोनाशयाग्ने॥ ३३॥ यद्दूतदू तान्येताविश्ये देवीवाचं वदसि। द्विषतोनःपरावद। तान्मसामसवेनय। त आर्त्यार्तिमाछेतु। अग्निनाग्निःसंवदतां॥ ३४॥ प्रसार्यसक्थ्यौपतोसि। सव्यमक्षि निपेपिच। मेहकस्यचनामेमत॥ ३५॥ अत्रिणात्रिमेहन्मि। कण्वेनजमदग्निना।

त्वा

२. त्रिभुवनं सोऽग्ने ब्रह्मणाहतः ॥ क्रिमीणां राजा ॥ अप्येषां स्थपतिर्हतः ॥ अथो माता
६४॥ अथो पिता ॥ अथो स्थूरा ॥ अथो क्षुद्राः ॥ अथो कृष्णा ॥ अथो श्वेताः ॥ अथो आशा
तिकाहताः ॥ श्वेताभिः सह सर्वे हताः ॥ २६ ॥ आहरावद्य ॥ शृतस्य हविषो य
था ॥ तत्सत्यं ॥ यदमुं यमस्य जम्भयोः ॥ आदधामि तथा हि तत् ॥ खण्फण
म्रसि ॥ २७ ॥ ब्रह्मणा त्वा शपामि ॥ ब्रह्मणस्त्वा शपथेन शपामि ॥ घोरेण त्वा
भृगूणां चक्षुषा प्रेक्षे ॥ रौद्रेण त्वाङ्गिरसां मनसा ध्यायामि ॥ अघस्य त्वा धा
रया विध्यामि ॥ अधरो मत्पद्यस्वासौ ॥ २८ ॥ उत्तुद शिमिजावरि ॥ तल्पे
३ जातन्युत्तुद ॥ गिरीं रनुप्रवेशय ॥ मरीचीरुपसंनुद ॥ यावदितः पुरस्तादुद
यातिसूर्यः ॥ तावदितोऽमुन्नाशय ॥ योऽस्मान्द्वेष्टि ॥ यं च वयं द्विष्मः ॥ २९ ॥ भू ॥ ६४ ॥
भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवः ॥ भुवो धायि भुवो द्धायि भुवो द्धायि ॥

नृम्णायि नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णं । निधाय्योवायि निधाय्योवायि
निधाय्योवायि ॥ ए अस्मे अस्मे । सुवर्नज्योतीः ॥ ४० ॥ पृथिवी समित् । तामग्निः
समिंधे । साग्निं समिंधे । तामहं समिंधे । सामासमिंध्वा ॥ आयुषा तेजसा ।
वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिंताः स्वाहा । अंतरिक्षं स
मित् ॥ १ ॥ तां वायुः समिंधे । सा वायुं समिंधे । तामहं समिंधे । सामासमिं
ध्वा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिं
ताः स्वाहा । द्यौः समित् । तामादित्यः समिंधे ॥ सादित्यं समिंधे । तामहं
समिंधे । सामासमिंध्वा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन ।
अन्नाद्येन समिंताः स्वाहा । प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा

मे श्रिसु स्वाहा ॥ अग्ने व्रतपते व्रतं चरिष्यामि ॥ ३ ॥ तच्छकेयं तन्मे राध्यतां
६५ ॥ वायो व्रतपते आदित्य व्रतपते ॥ व्रतानां व्रतपते व्रतं चरिष्यामि ॥ तच्छ
केयं तन्मे राध्यतां ॥ द्यौः समित् ॥ तामादित्यः समिंधे ॥ सादित्यꣳ समिं
धे ॥ तामहꣳ समिंधे ॥ सामा समिद्ध ॥ आयुषा तेजसा ॥ ४ ॥ वर्चसा श्रि
या ॥ २ यशसा ब्रह्मवर्चसेन ॥ अन्नाद्येन समिताꣳ स्वाहा ॥ अंतरिक्ष
ꣳ समित् ॥ तां वायुः समिंधे ॥ सा वायुꣳ समिंधे ॥ तामहꣳ समिंधे ॥ सामा
समिध्या ॥ आयुषा तेजसा ॥ वर्चसा श्रिया ॥ ५ ॥ यशसा ब्रह्मवर्चसेन
॥ अन्नाद्येन समित्ताꣳ स्वाहा ॥ पृथिवी समित् ॥ तामग्निः समिंधे ॥ सा
ग्निꣳ समिंधे ॥ तामहꣳ समिंधे ॥ सामा समिद्ध ॥ आयुषा तेजसा ॥ व ॥ ६५ ॥

वँसाश्रिया। यन्नोसाब्रह्मवर्च्चसेन ॥५॥ अग्नायेनुसमिंता ऽस्वाहा। भ्राजा
पुसाम्मेसुमिदसिसपल्लक्षयणी। भ्राजुव्युहामेसिसुस्वाहा। आग्दे सव्रतपते
व्रतमं चारिषं। तद्दशकं तन्मेराधि। वायोव्रतपते गे व्रतपते। व्रतानांव्रतपते
व्रतंचारिषं। तदशकं तन्मेराधि ॥७॥ सामित्समिंधेव्रतं चरिष्यामि तेजसा
श्रियाब्रह्मवर्च्चसेनाष्टोत्व ॥४१॥ शंन्नोवातःपवतांमातरिश्वा शंनस्तपतु
सूर्यः। अहानि शंभवंतुनः शंरात्रिः प्रतिधीयतां। शमुषानो व्युछतु शमा
दिसउदेतुनः। शिवानः शंतेमाभवस्कन्दी कासरस्वति ॥ मातेव्योमसं
हशि। हिरण्यै वासुवसि वासुमहांस्कंधं तेभूयासम ना वास्तो। श्रेष्ठस्मस्थवा
स्कःसम्भूया योस्मान्द्वेष्टियं चवयंद्विष्मः। प्रतिष्ठोऽसिप्रतिष्ठावंतोभूयास्म

२०

॥ ६६॥

मा प्रतिष्ठा योऽस्मि स्मस्य प्रतिष्ठः समेयाद्योस्मान्द्वेष्टि यं च वयं द्विष्मः। आवा
त वाहि भेषजं वि वात वाहि यद्रपः। त्वं हि विश्वभेषजो देवानां दूत ईयसे। द्वा
विमौ वातौ वात आ सिंधोरा परावतः॥ १॥ दक्षं मे अन्य आ वातु परान्यो वातु
यद्रपः। यददो वात ते गृहे मृतस्य निधिर्हितः। ततो नो देहि जीवसे ततो नो दे
हि भेषजं। ततो नो मह आवह वात आ वातु भेषजं शंभू मयोभूर्नो हृदे। प्रण
आयूंषि तारिषत्। इंद्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः साश्वः। स ह यन्मे अ
स्ति तेन। भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः प्रपद्ये वायुं प्रपद्ये
नार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्ये ॥ ६६॥
ओं प्रपद्ये। अंतरिक्षं म उर्वंतरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्व

स्तिमान्तयोश्चक्षुस्ता स्वस्तिमानसानि। प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा
हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयी
न्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ २ ॥ द्युभिरक्तु
भिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः। तन्नो मित्रो वरुणो मामहन्ता
मदितिः सिन्धुः पृथिवी उत द्यौः। कया नश्चित्र आभुवदूती सदावृधः सखा।
कया शचिष्ठया वृता। कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदा
रुजे वसु। अभी षुणः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः। वयः
सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्तमूर्णुहि पूर्धि
चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥ ३ ॥ शं नो देवीरभिष्टय आपो भवन्तु

सामंत्रां।ला

॥६७॥

पीतये। शं यो रभिस्रवंतु नः। ईशाना वार्याणां क्षयंतीश्चर्षणीनां। अपो याचा
मि भेषजं। सुमित्रा न आप ओषधयः संतु दुर्मित्रास्तस्मै भूयासुर्यो स्मान्द्वेष्टि यं
च वयं द्विष्मः। आपो हिष्ठा मयो भुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे। यो
वः शिवतमो रसस्तस्य भाजयते ह नः। उशतीरिव मातरः। तस्मा अरं गमाम
वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः। पृथिवी शांता साग्निना शां
ता श्चुचं शमयतु। अंतरिक्षं शांतं तद्वायुना शांतं तन्मे शांतं शुचं शम
यतु। द्यौः शांता सादित्येन शांता सा मे शांता शुचं शमयतु। पृथिवी शांतिरं
तरिक्षं शांतिर्द्यौः शांतिर्दिशः शांतिरवांतरदिशः शांतिरग्निः शांतिर्वायुः
शांतिरादित्यः शांतिश्चंद्रमाः शांतिर्नक्षत्राणि शांतिरापः शांतिरोषधयः शां ॥६७॥

त्तिर्वनस्पतयः शांतिर्गौः शांतिरजा शांतिरश्वः शांतिः पुरुषः शांतिर्ब्रह्म शांति
र्ब्राह्मणः शांतिः शांतिरेव शांतिः शांतिर्मे अस्तु शांतिः। तयाहꣳ शांत्या सर्वशा
न्त्या मह्यं द्विपदे चतुष्पदे च शांतिं करोमि शांतिर्मे अस्तु शांतिः। एह श्रीश्च ह्री
श्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठंतमनूत्तिष्ठंतु मा
माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हा
सिषुः। उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृता
ꣳ अनु। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम श
रदः शतं नंदाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवा
म शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे।

आर॰
।६९॥

॥५॥ यउद्गान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभोलोहिता
क्षःसूर्योविपश्चिन्मनसापुनातु॥ ब्रह्मणःकोशोसिब्रह्मणआणीस्थोब्रह्मण
आवपनमसिधारितेयंपृथिवीब्रह्मणामहीधारितमेनेनमहदन्तरिक्षंदिवं
दाधारपृथिवीꣳसदेवांयदहंवेदतदहंधारयाणिमामद्वेदोधिविस्रसत्।मे
धामनीषेमाविशतांꣳसमीचीभूतस्यभव्यस्यावरुद्ध्यैसर्वमायुरयाणिस
र्वमायुरयाणि।आभिर्गीर्भिर्यदतोनऊनमाप्यायय हरिवोवर्धमानः।यदा

४

स्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्याम।ब्रह्मप्रावादिष्मतन्न
ोमाहासीत्॥ओꣳशान्तिःशान्तिःशान्तिः॥६॥पुरस्तोद्धातुवस्याञ्जिन्व॥६९
धद्व्रोसमन्व॥४२॥नमोयुञ्जतेरक्षोअभ्वेस्यब्रह्मन्नवर्गेणब्रह्मन्नव

रिष्यामो रत्नाभा चोरपंइंयगोपांदेवस्यसमुद्धायेषेपीपिहि घर्मेयांतेमहीनांचत्वा
यैस्कानयापुरस्तोसप्तसप्तमाणायुत्रीणिपूर्वे चत्वार्युदस्येकुादद्या यास्तेसप्ता
गिनधुवः सोदेकान्नविंशतिर्भेरुधोरिच्छिंशद्रूमोथिपोडशयास्तेघोरान्व
स्तिस्कोसेधुनिश्चदेउयश्चत्रीण्यहोरात्रेपंचुरवद्वीणि ।विगाः सुन्दस्त्रास्ते
मुरवश्चत्वारियेदंतह्रुकुसः पंचयदीषितश्चत्वारिदीर्घमुखित्रीणि।श्यानुत्वारि
येदंतडुतानिषद्ध सार्यंत्रीण्यत्रिणादहूराव यूत्रह्मणाषद्ध्रडुचुदोस्तेभूः षट्
धिव्येस्पेष्टिः शंनः सप्तपंचाशद्द्विचत्वारिंशत ॥ ४२ ॥ नमोत्थुंजेनजस्से
मवुर्येणमयिरुगंतरिक्षेणघर्मयांतेमाणायुस्तिस्कोक्षादक्षमुपंचाशी
तिः ॥ ॥ ८ ॥ ॥ नमोनुमदेतु ॥ ओं शांतिः शांतिः शांतिः ॥ ॥ ॥ ॥

ॐ ... अथ नार्थः॥

मर०
॥६१॥

हरिः ॐ॥ ओम्॥ ब्रह्म वै न्वस्तन्नो मा हासीत्॥ ओं शान्तिः शान्तिः शान्तिः॥ ओम्॥
देवा वै सत्रमासत॥ ऋद्धिं परिमितं यशस्कामाः॥ तेऽब्रुवन्॥ यन्नः प्रथ
मं यश ऋच्छात्॥ सर्वेषान्नस्तत्सह सदिति॥ तेषां कुरुक्षेत्रं वेदिरा
सीत्॥ तस्यै खाण्डवो दक्षिणार्ध आसीत्॥ तूर्घ्नमुत्तरार्धः॥ परीणज्जघनार्धः॥ मरव उ
त्करः॥ १॥ तेषां मखं वैष्णवं यश आर्च्छत्॥ तन्न्यकामयत॥ तेना
पाक्रामत्॥ तं देवा अन्वायन्॥ यशोऽवरुरुत्समानाः॥ तस्या
न्वागतस्य॥ सव्याद्धनुरजायत॥ दक्षिणादिषवः॥ तस्मादिषुधन्वं
पुण्यजन्म॥ यज्ञजन्मा हि॥ २॥ तमेकं सन्तं॥ बहवो नाभ्यधृष्णुव
न्॥ तस्मादेकमिषुधन्विनं॥ बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति॥

॥६१॥

सोऽस्मयत ॥ एकैमा संतं बहवो नाभ्यधर्षिषुरिति ॥ तस्यं म्रिष्मियाणस्य तेजो
पाक्रामत् ॥ तद्देवा ओषधीषु न्यमृजुः ॥ ते श्यामाका अभवन् ॥ स्मयाका वै ना
म ते ॥ २ ॥ तत्स्मयाकानां स्मयाकत्वं ॥ तस्माद्दीक्षितेनापिगृह्य स्मेतव्यं ॥
तेजसो धृत्यै ॥ स धनुः प्रतिष्कभ्यातिष्ठत् ॥ ता उपदीका अब्रुवन्वरं वृणामहै ॥
अथ व इमं रन्धयाम ॥ यत्र क्व च खनाम ॥ तदपोऽभितृणदामेति ॥ तस्मादुपदीका
यत्र क्व च खनन्ति ॥ तदपोऽभितृन्दन्ति ॥ ४ ॥ वारे वृतं ह्यासां ॥ तस्य ज्यामप्यादन् ॥
तस्य धनुर्विप्रवमाणं शिर उदवर्तयत् ॥ तद्द्यावापृथिवी अनुप्रावर्तत ॥ यत्प्रा
वर्तत ॥ तत्प्रवर्ग्यस्य प्रवर्ग्यत्वं ॥ यद्घ्राँ३ इत्यपतत् ॥ तद्घर्मस्य घर्मत्वं ॥ महतो वी
र्यमपप्तदिति ॥ तन्महावीरस्य महावीरत्वं ॥ ५ ॥ यदस्याः समभरन् ॥ तत्स

अरण ॥७०॥ वार

म्राड्ढः सम्राड्॥ तꣳ स्तृतं देवतोत्क्षे धाच्यं तं ण्हत॥ अग्निः प्रातः सवनं॥ इंद्रो माध्यंदि
नꣳ सवनं॥ विश्वेदेवास्तृतीयसवनं॥ तेनापशीर्ष्णा यज्ञेन यजमानाः॥ नाशिषोवारु
धत॥ नसुवर्गं लोकमभ्यजयन्॥ तेदेवा अश्विनावब्रुवन्॥ ६॥ भिषजौ वैस्थः॥ इदं य
ज्ञस्य शिरः प्रतिधत्तमिति॥ तावब्रूतां वरं वृणावहै॥ ग्रह एव नावत्रापि गृह्यता
मिति॥ ताभ्यामेतमाश्विनमगृह्णन्॥ तावेतद्यज्ञस्य शिरः प्रत्यधत्तां॥ यदाश्विनो गृह्य
ते तेन सशीर्ष्णा यज्ञेन यजमानाः॥ अवाशिषो रुंधत॥ अभिसुवर्गं लोकमजयन्॥
यदाश्विनं गृह्णन्ति॥ यज्ञस्यैव तद्भिषजा शिरः प्रतिदधति॥ तेन सशीर्ष्णा यज्ञेन यजमानः॥
अवाशिषो रुंधे॥ अभिसुवर्गं लोकं जयन्ति॥ तस्मादेष आश्विनप्रवयाइव॥ यदाश्व
र्यैः॥ ७॥ उत्करोत्सर्यते तेदंतिमहावीरत्समभुवंजयन्सुतच॥ ३॥ सावित्रं जुहोति
प्रसूत्यै॥ चतुर्गृहीतेन जुहोति॥ चतुःष्पादः पशवः॥ पशूनेवावरुंधे॥ चतस्रो दि

॥७०॥

ह्रोः॥ द्विदेवत्यमग्निं निष्टति॥ छंदांसि देवेभ्योऽपाक्रामन्॥ न वो भागानि हव्यं वक्ष्याम
इति॥ तेभ्य एतच्चतुर्गृहीतमधारयन्॥ पुरोनुवाक्यायै याज्यायै॥ १॥ देवतायै
वषट्काराय॥ यच्चतुर्गृहीतं जुहोति॥ छंदांस्येव तत्प्रीणाति॥ तान्यस्य प्रीतानि
देवेभ्यो हव्यं वहंति॥ स एष वा हिनो वदंति॥ होतव्यं दीक्षितस्य गृहा ३ इ न होत
व्यामिति॥ हविर्वै दीक्षितः॥ यज्जुहुयात्॥ हविष्कृतं यजमानमग्नौ प्रदध्या
त्॥ यन्न जुहुयात्॥ २॥ यज्ञपरुरंतरियात्॥ यजुरेव वदेत्॥ न हविष्कृतं यज
मानमग्नौ प्रदधाति॥ न यज्ञपरुरंतरेति॥ गायत्री छंदांस्यत्यमन्यत॥ तस्यै
वषट्कारोऽभिद्रुत्य शिरोऽच्छिनत्॥ तस्यै द्वेधा रसः परापतत्॥ पृथिवीमर्धः प्राविश
त्॥ पशूनर्धः॥ यः पृथिवीं प्राविशत्॥ ३॥ स खदिरोऽभवत्॥ यः पशून्॥ सोजां॥
यत्खादिर्यभ्रिर्भवति॥ छंदसामेव रसेन यज्ञस्य शिरः संभरति॥ यदौदुंबरी॥

ऊर्ग्वाउंतुं बर्रः॥ उँजैंवयज्ञस्यशिरः संभरन्ति॥ यद्दैंणची॥ नेजोचैवेणुः॥ ४॥ नेजेसैवयु
ज्ञस्यशिरः संभरत्ति॥ यद्दैकेंकृती॥ भाएवावरुंधे॥ देवस्यत्वासवितुः प्रसवइ
सभ्निभार्ह्नेप्रतसै॥ अश्विनोर्बाकुभ्यामिसाह॥ अश्विनौर्हिदेवानांमध्वर्यू
आस्तां॥ पूष्णोहस्ताभ्यामिसाहयस्यैं॥ वज्रइवपारषा॥ फदुभ्निः॥ अभ्रिर
सिनारिरसीसाहश्रांसैं॥ ५॥ अध्वरकृदेवेभ्यइसोह॥ यज्ञोवाअध्वरः॥
यज्ञकृद्देवेभ्यइत्तिचावैतदाह॥ उत्तिष्ठब्रह्मणस्पतेंत्तृस्याह॥ ब्रह्मणेवयु
ज्ञस्यशिरोच्छ्रोति॥ मेनुब्रह्मणस्पत्तिरित्याह॥ प्रेश्रैवयुज्ञस्यशिरोच्छ्रेति॥
प्रदेव्येतुसूनृतेत्याह॥ यज्ञोवैसूनृता॥ अच्छावीरंनर्यंपंक्तिराधसमित्या
ह॥ ८॥ पांक्तोहियज्ञः॥ देवायज्ञंनयंतुनइत्याह॥ देवानेवयज्ञनियःकु
रुते॥ देवीद्यावापृथिवीअनुमेमंसाथामित्याह॥ आभ्यामेवानुमतो

यज्ञस्य शिरः संभरन्ति ॥ ऋध्यासमद्य मखस्य शिर इत्याह ॥ यज्ञो वै मखः ॥ ऋध्यास-
मद्य यज्ञस्य शिर इत्येवैतदाह ॥ मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह ॥ निर्दिश्यै-
वैनं हरन्ति ॥ ७ ॥ त्रिभिर्हरन्ति ॥ त्रय इमे लोकाः ॥ एभ्य एव लोकेभ्यो यज्ञस्य शिरः संभ-
रन्ति ॥ तूष्णीं चतुर्थं हरन्ति ॥ अपरिमितादेव यज्ञस्य शिरः संभरन्ति ॥ मृत्खनाद्ध-
रन्ति ॥ तस्मान्मृत्खनः करुण्यतमः ॥ इयत्यग्र आसीदित्याह ॥ अस्यामेवाच्छं-
बट्कारं यज्ञस्य शिरः संभरन्ति ॥ ऊर्जं वा एतं रसं पृथिव्या उपदीका उद्दिहन्ति ॥ ८ ॥
यद्वल्मीकं ॥ यद्वल्मीकवपा संभारो भवन्ति ॥ ऊर्जमेव रसं पृथिव्या अवरुंधे ॥ अ-
थो श्रोत्रमेव ॥ श्रोत्रं ह्येतत् पृथिव्याः ॥ यद्वल्मीकः ॥ अबधिरो भवति ॥ य एवं वे-
द ॥ इंद्रो वृत्राय वज्रमुदयच्छत् ॥ स यत्र यत्र पराक्रमत ॥ ९ ॥ तन्नाध्रियत ॥ स
ऽतीकं स्तंबे पराक्रमत ॥ सोऽध्रियत ॥ सोऽब्रवीत् ॥ ऊतिं वै मे धा इति ॥ तदूती-

अरण
॥७२॥

कां नामलीकहं॥ यदृतीकाभवंति॥ यज्ञायैवैनांनिर्दधाति॥ अग्निजाअसिप्रजा
पतेरेतइत्यहि॥ यएवरसः पशूनांप्राविशत्॥ १०॥ तमेवावरुंधे॥ पंचैतेसंभा
राभवंति॥ पांक्तोयज्ञः॥ यावानेवयज्ञः॥ तस्यशिरः संभरति॥ यद्ग्राम्याणां
पशूनांचर्मणासंभरेत्॥ ग्राम्यान्पशूञ्छुचार्पयेत्॥ कृष्णाजिनेनसंभरति॥
आरण्यानेवपशूञ्छुचार्पयति॥ तस्मात्समावत्पशूनांप्रजायमानानां॥ ११॥ मा ५
आरण्याः पशवः कनीयांसः॥ शुचाह्यृताः॥ लोमतः संभरति॥ अतोह्यस्य
मेध्यं॥ परिगृह्यायंति॥ रक्षसामपहत्यै॥ बहवोहरंति॥ अपचितिमेवा
स्मिन्दधति॥ उद्धतेसिकतोपोप्ते परिश्रितेनिर्दधाति शांत्यै॥ मदंतीभिरु
पसृजति॥ १२॥ तेजएवास्मिन्दधाति॥ मधुलामधुलाकेतिसंहि॥ श्र
संपृणेयास्मिन्तेजोदधाति॥ यद्ग्राम्याणांपात्राणांकपालैः संसृजेत्॥

॥७२॥

म्ना म्या णि पात्राणि भुचार्पयेत्॥ अर्मकपालैः सं संसृजन्ति॥ एतानि वा अनुपजी
वनीयानि॥ तान्येव भुचार्पयन्ति॥ शर्कराभिः सं संसृजन्ति धृत्यै॥ अथो शंत्व
य॥१३॥ अजलोमैः सं संसृजन्ति॥ एषा वा अग्नेः प्रिया तनूः॥ यदजा॥ प्रिय
येवैनं तनुवा सं संसृजन्ति॥ अथो तेजसे॥ कृष्णाजिनस्य लोमभिः सं संसृज
न्ति॥ यज्ञो वै कृष्णाजिनं॥ यज्ञेनैव यज्ञं सं संसृजन्ति॥१४॥ याज्यायेन जुहुय
द्विशुद्धेणुः शांसै पंक्तिः राधसन्मितसां हरुरन्तिर्दिहंनि पराकैमत्न विशसुजा
यमानानां सृजन्तिशु सायापाशे चे॥१५॥ पार्श्विभिनेकरोति॥ ब्रह्मवर्चसस्युप
र्गृहीत्यै॥ न कुर्वं न्नभिमाण्यात्॥ यत्कुर्वन्नभिप्राण्यात्॥ प्राणान्छु चार्पे
येत॥ अपहाय प्राणिति॥ प्राणानां गोपीथाय॥ न प्रवर्ग्यं चादित्यं चान्तरे
२ यात्॥ यदन्तर्यात्॥ दुश्चर्मा स्यात्॥१६॥ तस्मान्नान्तरायं॥ आत्मनो गोपीथा

यं ॥ वेणुना करोति ॥ तेजो वै वेणुः ॥ तेजः प्र पूर्व्यः ॥ तेजसैव तेजः समर्धयति ॥ मख
स्य शिरोऽसीत्याह ॥ यज्ञो वै मखः ॥ तस्यैतच्छिरः ॥ यदुखा ॥ २ ॥ तस्मादेवमा
ह ॥ यज्ञस्य पदे स्थ इत्याह ॥ यज्ञस्य ह्येते पदे ॥ अथो प्रतिष्ठित्यै ॥ गायत्रेण त्वा
छन्दसा करोमीत्याह ॥ छन्दोभिरेवैनां करोति ॥ त्र्युद्धिं करोति ॥ त्रय इमे लो
काः ॥ एषां लोकानामाप्त्यै ॥ छन्दोभिः करोति ॥ ३ ॥ वीर्यं वै छन्दांसि ॥
वीर्येणैवैनां करोति ॥ यजुषा बिलं करोति व्यावृत्त्यै ॥ इयतीं करोति ॥ प्रजा
पतिना यज्ञमुखेन संमितां ॥ इयतीं करोति ॥ यज्ञपरुषा संमितां ॥ इयतीं क
रोति ॥ एतावद्वै पुरुषे वीर्यं ॥ वीर्यसंमितां ॥ ४ ॥ अपरिमितां करोति ॥ अ
परिमितस्यावरुद्ध्यै ॥ परिग्रीवं करोति धृत्यै ॥ सूर्यस्य हरसा श्रायेत्याह ॥
यथायजुरेवैतत् ॥ अश्वशकेन धूपयति ॥ प्राजापत्यो वा अश्वः सयोनि

त्वाय ॥ २ छो अश्वस्य निष्पद्यसीत्याह ॥ असौ वा आदित्य एषोऽश्वः ॥ तस्य छंदांसि
निष्पत् ॥ ५ ॥ छंदोभिरेवैनं धूपयन्ति ॥ अर्चिषे त्वा शोचिषे त्वेत्याह ॥ तेजे
एवास्मिं दधाति ॥ वरुणोऽभिधत्ते ॥ मैत्रियोपैति शांत्यै ॥ सिध्यै त्वेत्याह ॥ पृथ्वी
यजुरेवैतत् ॥ देवस्त्वा सवितोद्वपत्वित्याह ॥ सवितृप्रसूत एवैनं ब्रह्मणा देव
१ ८५
ताभिरुद्वपति ॥ अपद्यमानः पृथिव्याशा दिश आपृणेत्याह ॥ ६ ॥ तस्माद
ग्निः सर्वा दिशोऽनुविभाति ॥ उत्तिष्ठ बृहन् भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठि
त्यै ॥ ईश्वरो वा एषोऽन्धो भवितोः ॥ यः पंचक्रमुचीक्षते ॥ सूर्यस्य त्वा चक्षु
षान्वीक्ष इत्याह ॥ चक्षुषो गोपीथाय ॥ ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा
त्वां
भूत्यै त्वेत्याह ॥ इयं वा ऋजुः ॥ अंतरिक्षं साधु ॥ असौ सुक्षितिः ॥ ७ ॥ दिशो
भूतिः ॥ इमानेवास्मै लोकान्कल्पयति ॥ अथो प्रतिष्ठित्यै ॥ इदमहममुमामु

अ॰ ण॰

॥७४॥

ष्या पूर्णं त्रिंशत्पशुभिर्भिस्सव चेत्सेनं पर्यूहामीत्याह ॥ विंशेश्चैवैनं पशुभिर्भिस्सव चेत्से
नं पर्यूहति ॥ त्रिंशत्तिरा जुष्यस्य भूयान् ॥ विंशेनैनं पर्यूहति ॥ पशुभिस्त्रिंशैवैथ्य
स्य ॥ पशुभिरेवैनं पर्यूहन्ति ॥ असुर्य्यं शत्रुमना श्रूयणं ॥ ९ ॥ आच्छृणत्ति ॥ देव
चाकः ॥ अजक्षीरेणा च्छृणत्ति ॥ परमं वा एतत्पयः ॥ यदजक्षीरं ॥ परमेणै
वैनं पयसा च्छृणत्ति ॥ यजुषा व्यावर्त्यै ॥ छन्दोभिरा च्छृणत्ति ॥ छन्दोभिर्वा ए
ष क्रियते ॥ छन्दोभिरेव छन्दांस्या च्छृणत्ति ॥ १ ॥ कुंपुथितश्च सुन्वन्नित्याह ॥ वा
चमेवावरुन्धे ॥ ऊर्जः पाज्जेतित्याह ॥ ऊर्जमेवावरुन्धे ॥ धुं धिहन्वे रित्याह ।
हविरेवाकः ॥ देवं पुरश्चर सघ्यासं त्वेत्याह ॥ यथा यजुरेवैतत् ॥ १० ॥ स्याप्तल
पर्यः श्छंदोभिः करोति वीर्य्यं समितं छन्दांसि निष्युसृणेत्याह सुक्षितिरना ॥७४॥
सं ण्णं छन्दांस्या श्रूयणं सेोमर ॥ मत्म श्वं गी धामो होतेनपुमे मभिसु

हीत्याह ॥ एष वा एतर्हि बृहस्पतिः ॥ यद्ब्रह्मा ॥ तस्मा एवैतत्प्रोच्य प्रचरन्ति ॥ आसन्नो
र्स्ये ॥ यमाय त्वा मखाय त्वेत्याह ॥ एता वा एतस्य देवताः ॥ ताभिरेवैनꣳ समर्धयति ॥
मरुत्तीभिः प्रोक्षति ॥ तेज एवास्मिन्दधाति ॥ १ ॥ अभिपूर्वं प्रोक्षति ॥ अभिपूर्वमेवास्मि
न्तेजो दधाति ॥ त्रिः प्रोक्षति ॥ त्र्यावृद्धि यज्ञः ॥ अथो मेध्यत्वाय ॥ होतान्वा
ह ॥ रक्षसामपहत्यै ॥ अनवानं ॥ प्राणानाꣳ सन्तत्यै ॥ त्रिष्टुभः सतीर्गायत्रीरिवा
न्वाह ॥ २ ॥ गायत्रो हि प्राणः ॥ प्राणमेव यजमाने दधाति ॥ सन्ततमन्वाह ॥ प्राणा
नामन्नाद्यस्य सन्तत्यै ॥ अथो रक्षसामपहत्यै ॥ परिमिता अनुब्रूयात् ॥ परिमि
तमवरुन्धीत ॥ अपरिमिता अन्वाह ॥ अपरिमितस्यावरुध्यै ॥ शिरो वा एतद्य
ज्ञस्य ॥ ३ ॥ यत्प्रवर्ग्यः ॥ उर्ज्जुजाः ॥ यन्नौ जोच्चैर्होम वदन्ति ॥ ऊर्जं वै यज्ञस्य शि
य— रः समर्द्धयन्ति ॥ प्राणाहुतीर्जुहोति ॥ प्राणानेव यजमाने दधाति ॥ सप्त जुहो

ति

ति ॥ समर्धयै शीर्ष्णोः प्राणाः ॥ प्राणानेवास्मिन्दधाति ॥ देवस्त्वा सविता मध्वानक्त्वित्या
ह ॥ ४ ॥ तेजसैवैनमनक्ति ॥ पृथिव्यास्तपसस्त्रायस्वेति हिरण्यमुपास्यति ॥ अस्या
अनतिदाहाय ॥ शिरो वा एतद्यज्ञस्य ॥ यन्महावीरः ॥ अग्निः सर्वा देवताः ॥ भ्रुवानासि
योपास्यति ॥ देवतास्वेव यज्ञस्य शिरः प्रतिदधाति ॥ अर्भस्तिशीर्ष्णोयं भवन्ति ॥
एतर्हि ह्येषः ॥ ५ ॥ अर्चिरसि शोचिरसीत्याह ॥ तेज एवास्मिन्ब्रह्मवर्चसं द
धाति ॥ सं सीदस्व महाँ असीत्याह ॥ महान्ह्येषः ॥ भ्रसुधाग्निनेविंदंति ॥ स
तेवावतन्त्रुतिजः ॥ येर्द्देशरणे मासयोः ॥ अथाक्रुधा होता यजमानाः शिर्षो या
ना ज्ञा सलुइति ॥ पुरस्ताद्धार्षीः स्वलुपा अन्यो यज्ञः ॥ उपरिष्टाद्धार्षीरप्यः ॥ र्द्दे
अनाधृष्या पुरस्तादिति पत्नी नियजूंष्याह ॥ शीर्षन्नेव यज्ञस्य यजमान
आशिषो वरूपे ॥ आयुः पुरस्तादाह ॥ प्रजां दक्षिणतः ॥ प्राणं पश्चात् ॥ श्रोत्र

मुत्तरतः ॥ चिदसीति मुपरिष्टात् ॥ प्राणानेवास्मै समीचो दधाति ॥ ईश्वरो वा एष प्रदि
शोऽनून्मदितोः ॥ यं दिशोऽनु व्यास्थापयन्ति ॥ ७ ॥ मनोरश्वासि भूरिपुत्रेति मामभि
मृशति ॥ इयं वै मनोरश्वा भूरिपुत्रा ॥ अस्यामेव प्रतितिष्ठत्यनुन्मादाय ॥ सुपस
दा मे भूया मा मा हिंसीरित्याहाहिंसायै ॥ चितस्थ परिचित इत्याह ॥ असौ चि
तिमेवास्मिन्दधाति ॥ शिरो वा एतद्यज्ञस्य ॥ यत्प्रवर्ग्यः ॥ असौ खलु वा आदित्यः
प्रवर्ग्यः ॥ तस्य मरुतो रश्मयः ॥ ८ ॥ स्वाहा मरुद्भिः परिश्रयस्वेत्याह ॥ अमुमेवादि
त्यं रश्मिभिः पर्यूहति ॥ तस्मादसावादित्योऽमुष्मिंल्लोके रश्मिभिः पर्यूढः ॥ तस्मा
द्राजा विशा पर्यूढः ॥ तस्माद्ग्रामणीः सजातैः पर्यूढः ॥ अग्नेः सृष्टस्य यतः ॥ वि
कङ्कतं भा आर्छत् ॥ यद्वैकङ्कताः परिधयो भवन्ति ॥ भा एवावरुन्धे ॥ द्वादश
भवन्ति ॥ ९ ॥ द्वादश मासाः संवत्सरः ॥ संवत्सरमेवावरुन्धे ॥ अस्ति त्रयोदशो मा

अरण प्र ५

॥७६॥

सुइ सोहुः ॥ प श्रेयो रुद्राः परिधिर्भवंति ॥ नैनं वर्त्मेषो हुरं भासुमदंतरिक्षे ॥ अंतरिक्ष
स्यांतर्धिरसीत्याह व्यावर्त्ये ॥ दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमपि निदधा
ति ॥ अमुष्या अनतिदाहाय ॥ अथो आभ्यामेवैनमुभयतः परिगृह्णाति ॥ आ
र्हन्बिभर्षि सायकानि धन्वेत्याह ॥१०॥ स्तौत्येवैनमेतत् ॥ गायत्रमसि त्रैष्टुभम
सि जागतमसीति धवित्राण्यादत्ते ॥ छंदोभिरेवैना न्यादत्ते ॥ मधु मध्विति
धूनोति ॥ प्राणो वै मधु ॥ प्राणमेव यजमाने दधाति ॥ त्रिः परियंति ॥ त्रिवृद्धि प्रा
णः ॥ त्रिः परियंति ॥ त्र्यावृद्धि यज्ञः ॥११॥ अथो रक्षसामपहत्यै ॥ त्रिः पुनः परि
यंति ॥ षट् संपद्यंते ॥ षड्वा ऋतवः ॥ ऋतुष्वेव प्रतितिष्ठंति ॥ यो वै घर्मस्य प्रियां
तनुवमाक्रामति ॥ दुश्चर्मा वै स भवति ॥ एष ह वा अस्य प्रियां तनुवमाक्राम ॥७६॥
ति ॥ यः त्रिः परीत्य चतुर्थं पर्येति ॥ एता ह वा अस्य सोमशुष्मा वाराजेनी राचका

म॥१२॥ ततो वै स द्रुश्च्यर्मोऽभवत्॥ तस्मात्त्रिः परीत्य न चतुर्थं परीयात्॥ आत्मनो गो
पीथाय॥ प्राणा वै पवित्राणि॥ अश्वे निषङ्गं पुनन्ति॥ प्राणानामश्वे निषङ्गं गायु
कुर्वे॥ चिन्निषध्यं पुनन्ति॥ दिह्यैव प्रतितिष्ठ॥ ऊर्ध्वं वै पुनन्ति॥ सुवर्गस्य लोकस्य
समष्ट्यै॥ सर्वतो पुनन्ति॥ तस्माद्यꣳ सर्वतः पवते॥ द्रुधान्तु चान्याह यज्ञस्योद्ध्
उपरिष्टाद्वाशीरन्यो अच्छापयन्ति त्रुभयो भवन्ति॥ धेन्वै स्वाहा यज्ञश्च कामस समष्ट्यै
द्वे॥४॥ अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसे स्वाहा॥ अग्निरेवैन
वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा॥ समोह चित्तो रोचय स्वाहा॥ आ
शिषमेवैतामाशास्ते॥ इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसे स्वाहा॥
इन्द्र एवैनꣳ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा॥ समोह चित्तो रोचय स्वा
हा॥ आशिषमेवैतामाशास्ते॥ वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छं

मरुण ५९

॥७७॥ दसे स्याह॥ वरुण एवैनं मारुद्रियेः प्रजाद्यो वयन्ति आस्ते तनूछं ईसा॥ ॥ समोरु च्युतो
रो चूये स्याह॥ आग्नि षमेवैनामा उांस्ते॥ धुताज स्वः मारुतो मरुद्भिरुत्तरतो रो चयन्ता
तुष्टुभेनु छं दसे स्याह॥ धुतान एवैनं मारुतो मरुद्भिरुत्तरतो रो चयन्ता तुष्टुभेनु छंद
सा॥ समोरु च्युतो रो चूपे स्याह॥ आग्नि षमे वैनामा उांस्ते॥ बृहस्पति स्त्वा विश्वैर्देवै
से
रूपरिष्टाद्रो च यतु पांक्तेन छं दसे स्याह॥ बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रो चय
ति पांक्तेनु छं ईसा॥ समोरु च्युतो रो चुपे स्याह॥ आग्नि षमेवैनामा उांस्ते॥ रक्षो
च्युतस्त्वं देव घर्म देवेष्वसी स्याह॥ तो च्युतो रो चपदेवेषु॥ तो च्युषी याहं मनुष्येषु
स्याह॥ ते चैन एवेव मनुष्येषु॥ सम्राजु मेरु च्युतस्त्वं देवेष्वायुष्मां स्तेजस्वी
ब्रह्मवर्चसी स्याह॥ रुच्युतो रो दैवेषायुष्मांस्तेजस्वी ब्रह्मवर्चसी॥ ॥८७॥

रुक्मचितो हं मे नुष्येष्वायुष्मा ꣳस्तेजस्वी ब्रह्मवर्चसी भूयासमि स्वाहा ॥ रुक्मचितगल्वैषमनु

ष्येष्वायुष्मा ꣳस्तेजस्वी ब्रह्मवर्चसी भवन्ति ॥ रुगसि रुचं मयि धेहि मयि रुगिति स्वा

हा ॥ आशिषमेवैतामाशास्ते ॥ ३ ॥ तं यदेतैर्यजुर्भिररोचयित्वा ॥ रुक्मचितोपुम

इतिमन्यथात् ॥ अरोचुकोध्वर्युः स्यात् ॥ अरोचुकोयजमानः ॥ अथयदेन

मेतैर्यजुर्भिरोचयित्वा ॥ रुक्मचितोपुमेइतिमाहे ॥ रोचुकोध्वर्युर्भवति ॥ रोचु

कोयजमानः ॥ ४ ॥ पृष्ठ्यात्रो चयति जागतेन छंदसा समंःरुक्मचित तोरोचुये स्वाहाश्रि

षमेवैतामाशास्तेशोचे ॥ ५ ॥ शिरो वा एतद्यज्ञस्य ॥ यद्धर्म्यः ॥ ग्रीवा उपसदः ॥

पुरस्तादुपसदो प्रवृग्यं प्रवृणक्ति ॥ ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति ॥ त्रिः प्र

वृणक्ति ॥ त्रय इमे लोकाः ॥ एष्वेव लोकेष्वायज्ञस्य शिरोवरुन्धे ॥ षट्संपद्यते ।

अरण४५

॥७८॥

षड्वा ऋतवः ॥१॥ ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे ॥ चतुर्विंशतिः संपद्यन्ते ॥ चतु
र्विंशतिरर्धमासाः ॥ अर्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे ॥ अथो खलु ॥ स
कृदेव प्रचर्यः ॥ एकं हि शिरः ॥२॥ अग्निष्टोममुपयन्ति ॥ एष वाव यज्ञः ॥ यावा
नग्निष्टोमः ॥ यावानेव यज्ञः ॥ तस्य शिरः प्रतिदधाति ॥ नोक्थ्यः स्यात् ॥ प्र
जा वै पशव उक्थानि ॥ यदुक्थ्यः स्यात् ॥ प्रजां पशूनस्य निर्दहेत् ॥ विश्व
जित्सर्वपृष्ठमुपयन्ति ॥३॥ पृष्ठानि वा अच्युतं च्यावयन्ति ॥ पृष्ठैरेवास्मा अ
च्युतं च्योऽवरुन्धे ॥ अपश्यं गोपामित्याह ॥ प्राणो वै गोपाः ॥ प्राणमेव प्रजासु
वियोनयति ॥ अपश्यं गोपामित्याह ॥ असौ वा आदित्यो गोपाः ॥ स हीमाः
प्रजा गोपायति ॥ तमेव प्रजानां गोप्तारं कुरुते ॥ अनिपद्यमानमित्याह ॥४॥

॥७८॥

न स्तेषु नि पद्यन्ते ॥ आ च परा च पथिभिश्चरं तमित्स्वाहा ॥ आ च स्तेषु परा च पथिभि
श्चरन्ति ॥ स सध्रीचीः स विषूचीर्वसान इत्स्वाहा ॥ सध्रीचीश्च स्तेषु विषूचीश्च
वसाना प्रजा अभि विपश्यन्ति ॥ आ वरीवर्ति भुवनेष्वन्तरित्स्वाहा ॥ आ स्तेषु
वरीवर्ति भुवनेष्वन्तः ॥ अत्र माध्वी मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्स्वाहा ॥ वासं
तिका वै वा अस्मा ऋतून् कल्पयन्ति ॥ समग्निरग्निना गतेत्स्वाहा ॥ ५ ॥ ग्रैष्मा वै वा अस्मा
ऋतून् कल्पयन्ति ॥ समग्निरग्निना गन्तेत्स्वाहा ॥ अग्निस्तेषु तेषा ग्निना संगच्छन्ते ॥ य
स्वाहा समग्निस्तपसा गतेत्स्वाहा ॥ पूर्वमेवोदितं ॥ उत्तरेणाभिगृणाति ॥ धू
तोऽह्नि यो विभासिरजसः पृथिव्या इत्स्वाहा ॥ वार्षिका वै वा अस्मा ऋतून् कल्पयन्ति ॥
हृदे त्वा मनसे त्वेत्स्वाहा ॥ शारदा वै वा अस्मा ऋतून् कल्पयन्ति ॥ ६ ॥ दिवि देवेषु

होत्रायपृष्ठेस्वाहा॥होत्राभिरेवैमांल्लोकान्त्संदधाति॥विश्वांसांभुवांपतयइस्वा
हा॥हेमन्तिकावैवास्माऋतून्कल्पयन्ति॥देवभूयस्वर्देवधर्मदेवान्याहीस्वाहा॥
ओत्रिरावैवास्मोऋतून्कल्पयन्ति॥तपोजांयाचमुस्मेनियपृष्ठेहेवायुवमिस्वाहा
यावैमेध्यावाक्॥सातपोजाः॥तामेवावरुन्धे॥७॥गर्भौदेवानामिस्वाहा॥गर्भो
ह्येषदेवानां॥पितामतीनामिस्वाहा॥प्रजावैमतयः॥तासामेषएवपिता॥यस्मैव
र्ध्येः॥तस्मादेवमोह॥पतिःप्रजानामिस्वाहा॥पतिर्ह्येषप्रजानां॥मतिःकवीनामिस्वा
हा॥८॥मतिर्ह्येषकवीनां॥संदेवोदेवेनसवित्रायतिष्टसंस्वर्येणारुक्षेस्वाहा॥अ
मुंचैवाग्निस्यंप्रेयंचसंशास्ति॥आयुर्दास्त्वमस्मभ्यंघर्मवर्चोदाअसीस्वाहा॥आ शा
शिषमेवैतामाशास्ते॥पितानोसिपितानोबोधिस्वाहा॥बोधयत्येवैनं॥नेवत्वेवक्तु ॥७२॥

ज्ञा भवंति॥ पलितेयेद शमः॥ नवृथे पुरुषेभ्यायाः॥९॥ नाभिर्दशामी॥ प्राणानेवय
जेमानेदधाति॥ अथोदशाक्षरा विराट्॥ अन्नं विराट्॥ विराजैवान्नाद्यमवरुंधे।
यज्ञस्य शिरोछिद्यत॥ नहुवाहोत्राभिः प्रसंस्थुः॥ ऋत्विजोवेक्षंते॥ एतावै होत्राः॥
होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति॥१०॥ रुचितमवेक्षंते॥ रुचितोवै प्रजा
पतिः प्रजा असृजत॥ प्रजानां सृष्ट्यै॥ रुचितमवेक्षंते॥ रुचितोहि पर्जन्यो वर्षति।
वर्षुकः पर्जन्यो भवति॥ संप्रजा एधंते॥ रुचितमवेक्षंते॥ रुचितं वै ब्रह्मवर्च
स॥ ब्रह्मवर्चसिनो भवंति॥११॥ अधीयंतोवेक्षंते॥ सर्वमायुर्यंति॥ नपश्य
वेक्षेत॥ यत्पश्यन्नवेक्षेत॥ प्रजायेत॥ प्रजां चास्य निर्दहेत्॥ यन्नावेक्षेत॥ न
प्रजायेत॥ नास्य प्रजां निर्दहेत्॥ तिरस्कृत्य यजुर्वाचयति॥ प्रजायते॥ नास्य

अरणम·५

॥९०॥

प्रजां निर्दहन्ति ॥ तुर्यामतीते सप्तपेये सोऽह ॥ सप्ताधि प्रजाः प्रजायन्ते ॥ १२ ॥ ऋ
तवो हि शिरः सर्वपृष्ठेश्वरेण कस्य निपद्यमानाभि सोऽह गुने सोऽह शारदो वा
स्मा ऋतवः कल्पयन्ति रन्धे कवीनामि सोऽह प्राणाः प्रसिद्धा तिभवन्ति वा च यन्ति च
त्वारि च ॥ ६ ॥ देवस्य त्वा सवितुः प्रसव इति ऋत्विजां नामादेशे प्रसूये ॥ अश्विनोर्बाहुभ्या
मिति सोऽह ॥ अश्विनौ हि देवानामध्वर्यू आस्तां ॥ पूष्णो हस्ताभ्यामि सोऽह यस्मै ॥ आ
हृदे हि सैरस्मासी सोऽह यजुष्कृस्यै ॥ इडे रन्त्यदिते सरस्वत्येहि सोऽह ॥ एतानि
वा अस्यै देवनामानि ॥ देवनामैरेवैना मादयन्ति ॥ असावेत्यसावेत्यसावेहि सोऽह ॥
एतानि वा अस्यै मनुष्यनामानि ॥ १ ॥ मनुष्यनामैरेवैनाम मादयन्ति ॥ पञ्चपदी ॥ ष
डृतवः ॥ ऋतुभिरेवैनाम मादयन्ति ॥ अदित्या उष्णीषमसीति सोऽह ॥ यथा यजुरेवै ॥९०॥

न्तु॥ वायुरंस्वेड इत्याह॥ वायुर्देवस्यो वै वत्सः॥ पूषा त्वोपावसृजत्वित्याह॥ पूषा वै दे
वतया पशवः॥२॥ स्वयैवैनं देवतया प्रसृजति॥ अश्विभ्यां प्रदापयेत्याह॥ अश्वि
नौ वै देवानां भिषजौ॥ ताभ्यामेवास्मै भेषजं करोति॥ यस्ते स्तनः शशय इत्याह॥ स्तो
स्वैवैनौ॥ उस्र घर्मं शिंषोस्र घर्मं पाहि घर्माय शिंषेत्याह॥ यथा ब्रूयादमुष्मै देही
ति॥ तादृगेव तत्॥ बृहस्पतिस्त्वोपसीदत्वित्याह॥३॥ ब्रह्म वै देवानां बृहस्पतिः॥
ब्रह्मणैवैनामुपसीदति॥ दानवः स्थ पेरव इत्याह॥ मेध्यानेवैनान्करोति॥ विष्वग्वृ
तो लोहितेनेत्याह व्यावृत्त्यै॥ अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृ
हस्पतये पिन्वस्वेत्याह॥ एताभ्यो ह्येषा देवताभ्यः पिन्वते॥ इन्द्राय पिन्वस्वेन्द्राय पि
न्वस्वेत्याह॥ इन्द्रमेव भागधेयेन समर्धयति॥ द्विरिन्द्रायेत्याह॥४॥ तस्मादिन्द्रो दे

यतो नां भूयिष्ठभाक्तमः ॥ गायत्रोसि त्रैष्टुभोसि जागतमसीति छकोपयमानाहत्ति ॥
छंदोभिरेवैनानाहंते ॥ सहोजो भागेनोप मेहि स्वाहा ॥ ऊर्जं एवैनं भागमकः ॥ अ
ग्निर्वा एतस्य यज्ञस्य शिरः अग्निरर्धता वत्रूर्ते ॥ आयाम्यामेव पूर्वाभ्यां वषट्क्रियतामुति
इंद्राग्निनामधुनः सारघस्य स्वाहा ॥ अग्निभ्यामेव पूर्वाभ्यां वषट्करोति ॥ अथो अ
ग्नीनोवेव भागधेयेनैनान्समर्धयति ॥ ५ ॥ घर्मं पान्त वसवो यजत्रा वड्स्वाहा ॥ वसूने
व भागधेयेनैनान्समर्धयति ॥ यद्वषट्कुर्यात् ॥ यातयामास्य वषट्कारः स्यात् ॥ यन्न वषट्
कुर्यात् ॥ रक्षांसि यज्ञं हन्युः ॥ वडिति स्वाहा ॥ परोक्षमेव वषट्करोति ॥ नास्य यात
यामा वषट्कारो भवति ॥ न यज्ञं रक्षांसि घ्नन्ति ॥ ६ ॥ स्वाहा त्वा सूर्यस्य रश्मये वृ
ष्टिवनये जुहोमि स्वाहा ॥ यो वा अस्य पुण्यो रश्मिः ॥ स वृष्टिवनिः ॥ तस्मा एवैनं जु

होति ॥ मधु हविरसी सो ह ॥ सूर्यस्येवैनं ॥ सूर्यस्य तपस्तपेसो ह ॥ यथा यजुरे
वैतत् ॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामी सो ह ॥ द्यावापृथिवीभ्यां परिगृ
ह्णाति ॥ ७ ॥ अंतरिक्षेण त्वोपयच्छामी सो ह ॥ अंतरिक्षेणैवैनमुपयच्छ
ति ॥ न वा एतं मनुष्यो भर्तुमर्हति ॥ देवानां त्वा पितॄणामनुमतो भर्तुं शकेयमि
सो ह ॥ देवैरेवैनं पितृभिरनुमत आदत्ते ॥ विधारणमेनं दर्धयति ॥ यसुश्चा
सुरज्य पुरो जुहोति ॥ तेजोऽसि तेजोऽनु प्रेही सो ह ॥ तेज एवास्मिन्दधाति ॥ दि
विस्पृङ्मा मा हिंसीरंतरिक्षस्पृङ्मा मा हिंसीः पृथिविस्पृङ्मा मा हिंसीरि
याहा हिंसायै ॥ ८ ॥ सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि सो ह ॥ आ
शिषमेवैतामाशास्ते ॥ शिरो वा एतद्यज्ञस्य ॥ यत्प्रवर्ग्यः ॥ आत्मा वायुः ॥ उ

मेवैनं परिगृह्णाति

अ॰ ण॰ दे॰ ५

॥ ९२ ॥

यत्सं यानना मान्त्याह ॥ आसन्नेव यज्ञस्य शिरः प्रतिदधाति ॥ अन्नेयानं ॥ प्राणानां सं-
तत्यै ॥ पंचाह ॥ ९ ॥ पांक्तो यज्ञः ॥ यावानेव यज्ञः ॥ तस्य शिरः प्रतिदधाति ॥ अग्नये
त्वा वसुमते स्वाहेत्याह ॥ असौ वा आदित्योऽग्निर्वसुमान् ॥ तस्मादेवैनं जुहोति ॥
सोमाय त्वा रुद्रवते स्वाहेत्याह ॥ चंद्रमा वै सोमो रुद्रवान् ॥ तस्मादेवैनं जुहोति ॥
वरुणाय त्वादित्यवते स्वाहेत्याह ॥ १० ॥ अप्स्वेव वरुण आदित्यवान् ॥ तस्मादे-
वैनं जुहोति ॥ बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह ॥ ब्रह्म वै देवानां बृहस्प-
तिः ॥ ब्रह्मण एवैनं जुहोति ॥ सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्या-
ह ॥ संवत्सरो वै सवितर्भुमान्विभुमान्प्रभुमान्वाजवान् ॥ तस्मादेवैनं जुहोति ॥
यमाय त्वाङ्गिरस्वते पितृमते स्वाहेत्याह ॥ प्राणो वै यमोऽङ्गिरस्वान्पितृमान् ॥ ११ ॥ ५ ॥ ॥ ९२ ॥

तस्मा एवैनं जुहोति ॥ एताभ्यामेवैनं देवताभ्यो जुहोति ॥ दश सं पद्यन्ते ॥ दशाक्षरा विराट् ॥
अन्नं विराट् ॥ विराज्येवान्नाद्यमवरुन्धे ॥ रोहिणाभ्यां वै देवाः सुवर्गं लोकमायन् ॥ तद्रो-
हिणयो रोहिणत्वं ॥ यद्रौहिणौ भवतः ॥ रोहिणाभ्यामेव तद्यजमानः सुवर्गं लोकमेति ॥
अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा रात्रिर्ज्योतिः केतुना जुष-
ताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेसाह ॥ आदित्यमेव तदमुष्मिँल्लोकेह्नः पुरस्ताद्दाधा-
र ॥ रात्रिया अवस्तात् ॥ तस्मादसावादित्योमुष्मिँल्लोकेहोरात्राभ्यां धृतः ॥ १२ ॥
मनुष्यनामानि पृश्नायः सीदस्वि स्वाहेत्याह प्रायेस्वाह धयन्तिं ग्नतिगरप्हास हिंः सोऽयं पु-
यं चो हादित्यवेतं स्वाहेस्वाह पिन्नमानेति चुचारिच ॥ ७ ॥ विश्वा आशा दक्षिण-
सद्रित्साह ॥ विश्वानेव देवान्प्रीणाति ॥ अथो दुरिष्ट्या एवैनं पाति ॥ विश्वान्देवान्

पाहीत्याह ॥ विश्वानेव देवान्भागधेयेन समर्धयति ॥ स्वाहाकृतस्य घर्मस्य मधोः
पिबतमश्विनेत्याह ॥ अश्विनावेव भागधेयेन समर्धयति ॥ स्वाहाग्नये यज्ञिया
य शं यजुर्भिरित्याह ॥ अभ्येवैनं धारयति ॥ अथो हविरेवाकः ॥१॥ अश्विना घर्मं
पातं हार्द्वानमहर्दिवाभिरूतिभिरित्याह ॥ अश्विनावेव भागधेयेन समर्ध
यति ॥ अनु वां द्यावापृथिवी मंसातामित्याह । अनुमत्यै ॥ स्वाहेन्द्राय स्वाहेन्द्राव
डित्याह ॥ इन्द्राय हि पुरो हूयते ॥ आश्राव्याह घर्मस्य यजेति ॥ वषट्कृते जुहोति ॥ रक्ष
सामपहत्यै ॥ अनु यजति स्वगाकृत्यै ॥ घर्मं पातमश्विनेत्याह ॥२॥ पूर्वमेवोदि
तं ॥ उत्तरेणाभिगृणाति ॥ अनु वां द्यावापृथिवी अमंसातामित्याहानुमत्यै ॥ तं प्रा
व्यं यथावण्णमो दिवे नमः पृथिव्या इत्याह ॥ यथायजुरेवैतत् ॥ दिवि धा इमं यज्ञं

जी

सुज्ञ्मिमं दिवि धाइ स्वाह ॥ सुवर्गमेवैनं लोकं गमयन्ति ॥ दिवं गच्छान्तरिक्षं गच्छ पृ
थिवीं गच्छ स्वाह ॥ एष्वेवैनं लोकेषु प्रतिष्ठापयन्ति ॥ पंच प्रदिशो गच्छ स्वाह ॥
॥ २ ॥ दिक्ष्वेवैनं प्रतिष्ठापयन्ति ॥ देवान्घर्मपानो गच्छ पितॄन्घर्मपान्गच्छ स्वाह ॥
उभयेष्वेवैनं प्रतिष्ठापयन्ति ॥ यस्मिन्वृते ॥ वर्षुकः पर्जन्यो भवति ॥ तस्मास्मि
न्ये मानुः पुण्यः ॥ यत्राद्रिन्वन्ते ॥ तेद्रुवानो ॥ यद्दक्षिणा ॥ नस्मिन्नपां ॥ ६ ॥ यस्मु
सक्र ॥ तन्मनुष्याणां ॥ यदुदंड ॥ तद्रुद्राणां ॥ प्रांचमुदंचं पिन्वयन्ति ॥ देवत्राकः ॥
अथो खलु ॥ सर्वा अनु दिशः पिन्वयन्ति ॥ सर्वा दिशः समेधन्ते ॥ अंतः परिधि पि
न्वयन्ति ॥ ५ ॥ तेजसो ऽस्कन्दाय ॥ इषे पीपिहूर्जे पीपिहि स्वाह ॥ इषमेवोर्जं य
जमाने दधाति ॥ यजमानाय पीपिहि स्वाह ॥ यजमानायैवैनामाशिषमाशा

स्ते ॥ मरुत्स्वंज्ये स्वा यप्री प्रिहि स्वाहा ॥ आत्मन्नेवैनत्तामा शिपमा शास्ते ॥ त्रिष्टैला
द्युम्नायेति क्रियायेता भस्येस्वाहा ॥ यथायजुरेवैतत् ॥ धर्मासिसुधर्मामेन्युस्मे
ब्रह्मा णिधारयेस्वाहा ॥ ६ ॥ ब्रह्मैवैनेनं प्रतिष्ठापयति ॥ नेत्वापत्तस्कुरस्वादितिय
द्धमिचरेत् ॥ अमुष्यत्वा प्राणेसादयाम्यमुनासहनिरर्थंगच्छेतिब्रूयाद्यंद्विष्यात् ॥
यमेवद्वेष्टि ॥ तेनैन ँ सहनिरर्थंगमयति ॥ पूष्णेशरसेस्वाहेस्वाहा ॥ या एवदेवत्ता
कृतभागाः ॥ ताभ्य एवैनं जुहोति ॥ ग्रावभ्यः स्वाहेस्वाहा ॥ या एवात्रर्त्विग्वाचः ॥
॥ ७ ॥ ताभ्यं एवैनं जुहोति ॥ प्रतिरेभ्यः स्वाहेस्वाहा ॥ प्राणा वैदेवाः प्रतिरः ॥ ते
भ्य एवैनं जुहोति ॥ द्यावापृथिवीभ्या ँ स्वाहेस्वाहा ॥ द्यावापृथिवीभ्यामेवैनं जु
होति ॥ पितृभ्यो घर्मपेभ्यः स्वाहेस्वाहा ॥ येवैयज्ञानः ॥ ते पितरो घर्मपाः ॥ तेभ्य

एवैनं जुहोति ॥ ८ ॥ रुद्राय रुद्रहोत्रे स्वाहेत्याह ॥ रुद्रमेव भागधेयेन समर्धयति ॥ सु
वर्तः समनक्ति ॥ सर्वत एव रुद्रं निरवदयते ॥ उदीचीं निरस्य ॥ एषा वै रुद्रस्य दि
क् ॥ स्वायामेव दिशि रुद्रं निरवदयते ॥ अप उपस्पृशति मेध्यत्वाय ॥ नान्वीक्षे
त ॥ यदन्वीक्षेत ॥ ९ ॥ चक्षुरस्य प्रमायुकं स्यात् ॥ तस्मान्नान्वीक्ष्यः ॥ अपीपरो
माह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जी
रित्याह ॥ आयुरेवास्मिन्वर्चो दधाति ॥ अपीपरो मा रात्रिया अह्नो मा पाह्येषा
ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरित्याह ॥ आयुरेवास्मिन्व
र्चो दधाति ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे
त्याह ॥ यथायजुरेवैतत् ॥ मृत्युवाग्निर्नो वरं ति ॥ होतव्यमग्निहोत्रा३ न होत

व्याऽउमिति ॥ १० ॥ यद्यनुष्णं जुहुयात् ॥ अथ यथापूर्वमाहुती जुहुयात् ॥ यन्न जुहुयान्न
अग्निः परो भवेत् ॥ भूः स्वाहेत्येव होतव्यं ॥ यथापूर्वमाहुती जुहोति ॥ नाग्निः परो
भवति ॥ कृतं हविर्मधु हविरस्त्वाह ॥ स्वदयत्येवैनं ॥ इन्द्रतमेऽग्नावित्याह ॥ ११ ॥
प्राणो वाऽइन्द्रतमोऽग्निः ॥ प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति ॥ पिता नोऽसि मा मा हि
ंसीरित्याह ॥ अहिंसायै ॥ अश्याम ते देव घर्म मधुमतो वाजवतः पितुमत इत्या
ह ॥ आशिषमेवैतामाशास्ते ॥ स्वधाविनोऽशीमहि त्वा मा मा हिंसीरित्याह ॥ अहिं
सायै ॥ तेजसा वा एते व्यृध्यन्ते ॥ ये प्रवर्ग्येण चरन्ति ॥ प्राश्नन्ति ॥ तेज एवात्मन्दध

स

ते ॥ १२ ॥ संवत्सरं न मांसमश्नीयात् ॥ न रामामुपेयात् ॥ न मृन्मयेन पिबेत् ॥ ना
स्य राम उच्छिष्टं पिबेत् ॥ तेज एव तत्संश्यन्ति ॥ देवासुराः संयत्ता आसन् ॥ ते

देवा विजयमुपयंतः ॥ विभ्राजिसोर्य्यं असमसंन्यदधत ॥ यत्किंचद्दिधाकीर्यं ॥ तदे
तेनैव अंते नागोपायत ॥ तस्मादेतद्धूतं चार्यं ॥ तेजसोगोपीथाय ॥ तस्मादेत
नियज्जूः विविभ्राजः शोर्यस्येसोकुः ॥ स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः
सः सादयंति ॥ स्वाहा त्वा नक्षत्रेभ्य इति सायं ॥ एतावा एतस्य देवताः ॥ ताभि
रेवैनं समर्धयति ॥ १२ ॥ अकुरश्मिने स्वाह मृदन्यौ गच्छे स्वाह पितृणा मेनः
परिधिं पिन्वयंति धारयेत्स्वाह वा चौ परमं पात्तेभ्य एवैनं जुहोत्यग्नीक्षैतहो
तव्या २ मित्यग्नाविसोहदधत्तेगोपायत्स्व तच ॥ ८ ॥ घर्मयाने द्विविश्वगाते
तिस्र आहुतीर्जुहोति ॥ छंदोभिर्वा स्वेभ्यो लोकेभ्यः भुचमवयजते ॥ इस
यग्नेर्जुहोति ॥ अथे प्रस्थेयंति ॥ त्रयइमे लोकाः ॥ एभ्य एव लोकेभ्यः भुच

मथव्ययजते॥ अनुनोद्यानुमतिरित्याहानुमत्यै दिवस्त्वा परस्यायाइत्याह॥ दिव
एवेमान्लोकान्दाधार॥ ब्रह्मणस्त्वा परस्यायाइत्याह॥१॥ एष्वेव लोकेषु ब्रह्म
दाधार॥ प्राणस्य त्वा परस्यायाइत्याह॥ प्रजास्वेव प्राणान्दाधार॥ शिरोवाए
तद्यज्ञस्य॥ यत्संवृग्यैः॥ असौ खलु वा आदित्यः संवृग्यैः॥ तं यद्दक्षिणा प्रत्यं
चमुदंचमुद्वासयेत्॥ जिह्मं यज्ञस्य शिरः प्रतिदध्यात्॥२॥ शिरो हरेत्॥
प्रांचमुद्वासयन्ति॥ पुरस्ताद्देवयज्ञस्य प्रांचमुद्वासयन्ति॥ तस्मादसावादित्यः
पुरस्तादुदेति॥ शफोपयमान्धवित्राणि धृष्टी इत्यन्ववहरंति॥ सात्मानमेव
नं सतनुं करोति॥ सात्मा मुष्मिन्लोके भवति॥ य एवं वेद॥ औदुंबराणि भव
न्ति॥ ऊर्ग्वा उदुंबरः॥ ऊर्जमेवावरुंधे॥ यर्मेनाचा अभिचित्य॥३॥ यज्ञं रक्षो ॥८६॥

ः सि जिघांसन्ति ॥ साम्ना प्रस्तोतान्वैति ॥ साम वै रक्षोहा ॥ रक्षसामपहत्यै ॥ त्रिर्निध
नमुपैति ॥ त्रय इमे लोकाः ॥ एभ्य एव लोकेभ्यो रक्षांस्यपहन्ति ॥ पुरुषः पुरुषो नि
धनमुपैति ॥ पुरुषः पुरुषो हि रक्षस्वी ॥ रक्षसामपहत्यै ॥ ४ ॥ यत्र स्थल उद्वास
येत् ॥ स्थलीं शुचार्पयेत् ॥ यदप्सु ॥ अपः शुचार्पयेत् ॥ यदोषधीषु ॥
ओषधीः शुचार्पयेत् ॥ यद्वनस्पतिषु ॥ वनस्पतीञ्छुचार्पयेत् ॥ हिरण्यं नि
धायोद्वासयन्ति ॥ अमृतं वै हिरण्यं ॥ ५ ॥ अमृत एवैनं प्रतिष्ठापयन्ति ॥ वृत्तु
र सिझंप्युधायाइन्ति त्रिः परिषिंचन्नयैन्ति ॥ त्रिवृद्वा अग्निः ॥ यावानेवाग्निः ॥
तस्य शुचं शमयन्ति ॥ त्रिः पुनः पर्यैन्ति ॥ षट् संपद्यन्ते ॥ षड्वा ऋतवः ॥ ऋतुभि
रेवास्य शुचं शमयन्ति ॥ चतुःस्रक्तिर्नाभिर्ऋतस्येत्याह ॥ ६ ॥ इयं वा ऋतं ॥

॥८७॥ तस्यां एषएव नाभिः॥ यसंचुर्यैः॥ तस्मां हृचमाह॥ सहो विश्वायुरित्याह॥ सहोहि
यं॥ अपूहैषा अपक्तृ इत्याह आनंव्यां मिथुर्ये॥ घमैंतले नेमे नसुरीषुमित्तेद
धामंधुमि श्रेणं शूरयन्ति॥ उर्ग्वा अन्नाधुंरधे॥ उंजै चैनम न्नाधैनुसमर्धयन्ति
॥७॥ अनेश्रनायुको भवन्ति॥ यत्त्वंवेदः॥ रंन्तिर्नामास्मि दिव्योगंधर्वइत्याह॥
रूपमेवास्यैतन्महिमानं रंतिंधुतांव्याचष्टे॥ समहमायुषासंमाणेनेत्याह॥
आशिषमेवैतामाशास्ते॥ असोयोस्मान्द्वेष्टि यंचवयंद्विष्म इत्याह॥ अभि
चार एवास्येष॥ अचिक्रदद्वृषाहरिरित्याह॥ वृषाह्येष॥ ८॥ वृषाहरिः॥ मह
न्मित्रोनदर्शतइत्याह॥ स्तौत्येवैनमेतत्॥ चिदःसिसमुद्रयोनिरित्याह॥ स्वामे ॥८७॥
वैनंयोनिंगमयन्ति॥ नमस्तेअस्तुमामाहिंसीरित्याह॥ अहिंसायै॥ विश्वावसु

पनु

२ सोमगंपुर्वेमिसोहा॥ परेद्वास्यंक्रियमाणस्यांतुर्यन्ति॥ तदेवास्यैतेनाप्याययन्ति॥
धियैश्वावसुरभितंमौगणा त्विसोहा॥ ९॥ पूर्वमेवोदितं॥ उत्तरेणाभिगृणाति॥ धि
यो हिन्वानो धियइन्नो अव्यादिसोहा॥ ऋतूलेवास्मैकल्पयन्ति॥ मासोगंधु
र्वो अमृतोनिवोचदिसोहा॥ प्राणावा अमृतोः॥ प्राणानेवास्मैकल्पयन्ति॥ एत
संदैवधर्मदेवोदेवानुपात्मा इत्सोहा॥ देवोह्येषसन्देवानुपैति॥ इदमहंमेव
वोमनुष्यानित्सोहा॥ १०॥ मनुष्योहि॥ एषसन्मनुष्यानुपैति॥ ईश्वरोवैमेपुर्यमु
द्वासयेन॥ प्रजांपशून्सोमपीथमनूद्वासुः सोमपीथानुमेगृहा॥ सुहप्रजयासुह
रायस्पोषेणेसोहा॥ प्रजामेवपशून्सोमपीथमात्संधत्ते॥ सुमित्रानआप
ओषधयः संत्विसोहा॥ आशिषमेवैतामाशास्ते॥ दुर्मित्रास्तस्मैभूयासुर्योस्मा
न्द्वेष्टियंचवयंद्विष्मइसोहा॥ अभिचारएवास्यैषः॥ ११॥ यथाएषोस्माल्लोका

अ॰ण॰दे॰३५

॥९९॥ र्त्यवर्त्तते॥ यः प्रत्युङ्मुद्रासयन्ति॥ उदुसं चित्र मित्तिसोरीभ्यांलग्यां पुनरेयुग

हं परसे जुहोति॥ अयं वै लोको गार्हपत्यः॥ अस्मिन्नेव लोके प्रतितिष्ठति॥

असौ खलु वा आदित्यः सुवर्गो लोकः॥ यत्सोरी भवतः॥ तेनैव सुवर्गं लो

कमेति॥१२॥ असलेण त्वापरस्या याउत्सोहरस्थायत्सिचियरक्षस्वीरक्षेसाम

पहसैवै हिरण्यमाहत्यपन्निस्तेष गणात्रिसाहमनुष्यानिसाहास्यै षो शे च॥

॥१॥ प्रजापतिं वै देवाः शुक्रं पयो दुदुह्रन्॥ तदेभ्यो न व्यभवत्॥ तदग्निर्व्यक

रोत्॥ तानि शुक्रियाणि सामान्यभवन्॥ तेषां योरसो त्यक्षरत्॥ तानि ऋक्यजूं

ष्यभवन्॥ शुक्रियाणां वा एतानि ऋक्पाणि॥ साम पयसं वा एतयोर

न्यत्॥ देवानामन्यत्पयः॥ पयसोः पयः॥१॥ तस्मात्तु पयः॥ यद्गायेपयः॥ ॥९९॥

तद्देवानां पयः ॥ तस्माद्यद्वैतैर्यजुर्भिश्चरन्ति ॥ न स्यर्यस्ता चरन्ति ॥ प्रजापतिमेव तद्देवान्
पर्यस्तं न्याय्येन समर्धयन्ति ॥ एष ह्येवैस्ता क्षा सं पुर्ग्यैर्भक्षयन्ति ॥ यस्यैवं विदुषः प्रवृ
र्ग्यैः प्रवृज्यते ॥ उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य ॥ तेजो वा उत्तरवेदिः ॥ २ ॥ तेजः
प्रवर्ग्यः ॥ तेजसैव तत्तेजः समर्धयन्ति ॥ उत्तरवेद्यामुद्वासयेदन्नकामस्य ॥ शिरो
वा एतद्यज्ञस्य ॥ यत्प्रवर्ग्यः ॥ मुखमुत्तरवेदिः ॥ शीर्ष्णैव मुखं संदधात्यन्नाद्या
य ॥ अन्नाद एव भवति ॥ यत्र खलु वा एतमुद्वासितं वयांसि पर्यासते ॥ परि
वेतारं समो प्रजा वयांस्यासते ॥ ३ ॥ तस्मादुत्तरवेद्यामेवोद्वासयेत् ॥ प्रजानां
गोपीथाय ॥ पुरो वा पश्चाद्वोद्वासयेत् ॥ पुरस्ताद्वा एतं ज्योतिरुदैति ॥ तस्य पश्चाग्नि
त्रीं चन्ति ॥ स्वामेवैनं योनिमनूद्वासयन्ति ॥ अपां मध्य उद्वासयेत् ॥ अपां वा

द्वो

॥८१॥

एतन्मध्याज्ज्योतिरजायत॥ ज्योतिः प्रकर्षः॥ स्वरेवैनं यो नोमन्तिष्ठापयन्ति॥ ४॥ यं द्विष्यात्॥ यत्र स स्यात्॥ तस्या दिश्युद्वासयेत्॥ एष वा अग्निर्वैश्वानरः॥ यत्र कर्षः॥ अग्निनैवैनं वैश्वानरेणाभिप्रवर्तयति॥ औदुम्बरीं शाखायामुद्वासयेत्॥ ऊर्ग्वा उदुम्बरः॥ अन्नं प्राणः॥ शुक्पूर्णः॥ ५॥ इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहामीत्याह॥ शुचैवास्य प्राणमपि दहति॥ ताजगार्तिमार्छति॥ यत्र दर्भा उपदीकसंततास्युः॥ तदुद्वासयेद्वृष्टिकामस्य॥ एता वा अपां मन्त्रस्यावयो नाम॥ यद्दर्भाः॥ असौ खलु वा आदित्य इतो वृष्टिमुदीरयति॥ असावेवास्मा आदित्यो वृष्टिं नियच्छति॥ ता आपो नियं नाधन्वे नायन्ति॥ ६॥ ॥८२॥

गोः पर्य उत्तरचूर्दिशां मनस्थापयन्ति पुनर्मोर्यन्ति॥ १०॥ प्रजापतिः मं न्यिपमो

णः ॥ सम्राडित्यन्ततः ॥ घर्मः प्रवृक्तः ॥ महावीर उद्वासितः ॥ असौ खलु वाव एष आदि-
त्यः ॥ यत्प्रवर्ग्यः ॥ स एतानि नामान्यकुरुत ॥ य एवं वेद ॥ विदुरेनं नाम्ना ॥ ब्रह्म-
वादिनो वदन्ति ॥ १ ॥ यो वै वचसीयाः संयथा नाम समुपचरन्ति ॥ पुण्यो हैव स तस्मै
कामयते ॥ पुण्यार्त्तिमस्मै कामयन्ते ॥ य एवं वेद ॥ तस्मादेवं विद्वान् ॥ घर्म इति दि-
वाचक्षीत ॥ सम्राडिति नक्तं ॥ एते वा एतस्य प्रिये तनुवौ ॥ एते अस्य प्रिये ना-
मनी ॥ प्रिययैवैनं तनुवा ॥ २ ॥ प्रियेण नाम्ना समर्धयति ॥ कीर्तिरस्य पूर्वा ग-
च्छति जनतामायतः ॥ गायत्री देवेभ्यो पाक्रामत् ॥ तां देवाः प्रवर्ग्येणैवानुव्य-
भवन् ॥ प्रवर्ग्येणाप्नुवन् ॥ यच्चतुर्विंशतिः रूर्सः प्रवर्ग्यैः प्रवृङ्क्ते ॥ गायत्रीमेव
वत्तदनुविमेयति ॥ गायत्रीमाप्नोति ॥ पूर्वासु जनेयतः कीर्त्तिर्गच्छति ॥ वेभ्र

७

अ॰ण॰दे॰प्र॰

॥१०॥

देवः सः संसन्नः ॥ ३ ॥ यत्सर्वः प्रवृत्तः ॥ सोमोऽभिक्रीयमाणः ॥ आश्विनः पर्यस्या
नीयमाने ॥ मारुतः कूर्दन् ॥ पौष्णउद्दन्तः ॥ सारस्वतो विष्यन्दमानः ॥ मैत्रः
शरो गृहीतः ॥ तेजउद्यतो वायुः ॥ ह्रियमाणः प्रजापतिः ॥ हूयमानो वाग्पुतः ॥ ४ ॥
असौ खलु वा वैष आदित्यः ॥ यत्प्रवर्ग्यः ॥ सएतानिनामान्यकुरुत ॥ यत्
वंचेद ॥ विदुरेनं नाम्ना ॥ ब्रह्मवादिनो वदन्ति ॥ यन्मृन्मयमाहुतिं नाश्नुतेऽथ ॥ क
स्मादेषोऽश्नुत इति ॥ वागेष इति ब्रूयात् ॥ वाच्येव वाचं दधाति ॥ ५ ॥ तस्मादश्नु
रा ते ॥ प्रजापतिर्वा एष द्वादशधा विहितः ॥ यत्प्रवर्ग्यः ॥ यत्प्रागवकाशेभ्यः ॥ ते
नैप्रजा असृजत ॥ अवकाशैर्देवासुरानसृजत ॥ यदूर्ध्वमेव काशेभ्यः ॥ ॥१०॥
तेनान्नमसृजत ॥ अन्नं प्रजापतिः ॥ प्रजापतिर्वा एषः ॥ ६ ॥ यद्धन्ति नतु वा

मरः संन्नोहूयमानो यान्घुतोदधास्तु प्रा ॥११॥ सविता भूत्वा प्रथमेहन्नवरुज्यते ॥ तेन कामा
एति ॥ यद्वितीयेहन्नवरुज्यते ॥ अग्निर्भूत्वा देवानेति ॥ यत्तृतीयेहन्नवरुज्यते ॥ वायु
र्भूत्वा प्राणानेति ॥ यच्चतुर्थेहन्नवरुज्यते ॥ आदित्यो भूत्वा रश्मीनेति ॥ यत्पंच
मेहन्नवरुज्यते ॥ चंद्रमा भूत्वा नक्षत्राण्येति ॥१४॥ यत्षष्ठेहन्नवरुज्यते ॥ ऋतुर्भूत्वा
संवत्सरमेति ॥ यत्सप्तमेहन्नवरुज्यते ॥ धाता भूत्वा शक्करीमेति ॥ यदष्टमेहन्नव
रुज्यते ॥ बृहस्पतिर्भूत्वा गायत्रीमेति ॥ यन्नवमेहन्नवरुज्यते ॥ मित्रो भूत्वा त्रि
वृतेडुमान्लोकानेति ॥ यद्दशमेहन्नवरुज्यते ॥ वरुणो भूत्वा विराजमेति ॥२४॥
यदेकादशेहन्नवरुज्यते ॥ इंद्रो भूत्वा त्रिष्टुभमेति ॥ यद्द्वादशेहन्नवरुज्यते ॥
सोमो भूत्वा सुत्यामेति ॥ यत्सुरसादुपसदामवरुज्यते ॥ तस्मादित्तः परा

॥१३॥ उ॰ मूल्लोकास्तपन्ते ति॥ यदुपरिष्टादुपसदौ अव॰ऽयन्ते॥ तस्मादमुतोर्वाड्ड
मा ल्लोकाः स्तपन्ते न्ति॥ य एवं वेद॥ ऐवन्तपति॥ ३१॥ न सत्रा ण्येति
विराजमेति तपति॥ १२॥ ॥ देवा वै सत्रं सांचित्वं परिश्रितेत्र
सुन्त्रचं रिष्या मो ग्निष्टा-शिरोग्नीचा ह्वे यस्य शुनां विद्वा आत्मा धर्म
याते प्रजापति रं स्रु कू प्रजापतिः सं भ्रियमाणः सचिताहारं ३३॥ ॥
॥१२॥ ॥ देवा वै सत्रं सर्वद्दिरः परिश्रितेभिपूर्वमथो रक्षो सांग्रेष्वा
चूचअस्रुपेद्दे धानामश्विना धर्मं शृणो यादड्डून मोग्निर्वैषा हर्यौ यो वैवसी
याः संयथानाम शैत्तं रात॥ १०८॥ अरुणपंचममप्रश्नस्समाप्तः॥ ॐ॥ ॥१३॥

म ॥ शन्नस्तन्नो माहांसीत्॥ ॐ शान्तिः शान्तिः शान्तिः॥

हरिःओम्॥संत्वासिंचामियजुषाप्रजामायुर्धनंच॥ओंशांतिः
शांतिःशांतिः॥ओंपरेयुवांसंप्रवतोमहीरनुबहुभ्यःपंथामनप
स्पशानंवैवस्वतंसंगमनंजनानांयमंराजानंहविषादु
वस्यत॥इदंत्वावस्त्रंप्रथमन्वागन्नपैतदूहयदिहाबिभःपुरा॥इ
ष्टापूर्तमनुसंपश्यदक्षिणांयथातेदत्तंबहुधाविबंधुषु॥इमौयु
नज्मितेवह्नीअसुनीथायवोढवे॥याभ्यांयमस्यसादनंसुकृ
तांचापिगच्छतात्॥पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुव
नस्यगोपाः॥सत्वैतेभ्यःपरिददात्पितृभ्योग्निर्देवेभ्यःसुविदत्रे
भ्यः॥पूषेमाआशाअनुवेदसर्वाःसोअस्माँअभयतमेननेे

अरण ॥९२॥

पतु॥स्वस्तिदाअघृणिःसर्ववीरोअप्रयुछन्पुरएतुप्रविद्वान्॥
॥१॥आयुर्विश्वायुःपरिपासतित्वापूषात्वापातुप्रपथेपुरस्तात्॥
यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु॥भुव
नस्यपतइदंहविः॥अग्नयेरयिमतेस्वाहा॥पुरुषस्यस
यावर्यपेदघानिमृज्महे॥यथानोअत्रनापरःपुराजरसआ
यति॥पुरुषस्यसयावरिवितेप्राणमसिस्रंसं॥शरीरेणम
हीमिहिस्वधयेहिपितृनुपप्रजयास्मानिहावह॥मैवंमां
स्ताप्रियेहंदेवीसतीपितृलोकंयदेषि॥विश्ववारानभसा
संव्ययंत्युभौनौलोकौपयसाभ्यावर्त्स्व॥२॥३॥इयंनारीपति ॥९२॥

लोकं वृणाना नि पद्यतु उप त्वा मर्त्यमेतं ॥ विश्वं पुराणमनु पालयंतीत
स्यै प्रजां द्रविणं चेह धेहि ॥ उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ॥ हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ सुवर्णं
हस्तादाददाना मृतस्य श्रिये ब्रह्मणे तेजसे बलाय ॥ अत्रैव त्वमिह व
यं सुशेवा विश्वाः स्पृधो अभिमातीर्जयेम ॥ धनुर्हस्तादाददाना मृ
तस्य श्रियै क्षत्रायौजसे बलाय ॥ अत्रैव त्वमिह वयं सुशेवा वि
श्वाः स्पृधो अभिमातीर्जयेम ॥ मणिं हस्तादाददाना मृतस्य श्रियै वि
शे पुष्ट्यै बलाय ॥ अत्रैव त्वमिह वयं सुशेवा विश्वाः स्पृधो अभिमा
तीर्जयेम ॥ ३ ॥ इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत

सोम्यानां॥ एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्तां॥ अग्नेर्व
र्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च॥ नेत्वा धृष्णुर्हरसा जर्हृषाणो द
धृग्विधक्ष्यन्पर्यङ्खयाते॥ मैनमग्ने विदहो माभिशोचो मास्य त्वचं चिक्षिपो
मा शरीरं॥ यदा शृतं कृणवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः॥ शृतं यदा
करसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः॥ यदा गच्छात्यसुनीतिमेतामथा दे
वानां वशनीर्भवाति॥ सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च
धर्मणा॥ अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः॥ अजो
भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः॥ यास्ते शिवास्तनु
वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकं॥ अयं वै त्वमस्मादधि त्व

मेतद्द्युयं वैतदस्य यो निरसि ।। वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहे
मꣳसुकृतां यत्रे लोकाः ।। विद्वानुभ्यावर्त्स्वा भिमातीर्जयेम शरीरेष्व
त्वारिच ।।१।। यज्ञ पूतस्य पथो गोप्तारस्तेभ्यः स्वाहा य एतस्य पथोर क्षि
तारस्तेभ्यः स्वाहा य एतस्य पथो भिर क्षितारस्तेभ्यः स्वाहा ख्यात्रे स्वाहा परख्यात्रे
भिलालपते स्वाहा पुलालपते स्वाहाग्नये कर्मकृते स्वाहा य मत्र नाधी
मस्तस्मै स्वाहा ।। यस्त इध्मं जभरत्सि ष्विदानो मूर्धानं वा ततपते त्वा
या ।। दिवो विश्वस्मात्सीमघायत उरुष्यः ।। अस्मा क्षेम घिज्जानो सिद्व
दुयं जायतां पुनः ।। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा ।।१।।
य एतस्य त्वं पंच ।।२।। प्र केतुना बृहता भात्यग्निरा विर्विश्वानि वृषभो

अरण
॥९४॥

रोरवीति॥ दिवश्चिदं ताद् पुमा मुदानड् पामुपस्छेमहि मावर्ववर्धि॥
दूदं तुएकं परउ तुएकं तृतीयेन ज्योतिषा संविशस्वा॥ संवेशनस्तनु
वै चारुरेधि प्रियो देवानां परमे सधस्छे॥ नाके सुपर्णमुपयत्पतं
तरहृदा वेनं तो अभ्यचक्षत त्वा॥ हिरण्यपक्षं वरुणस्य दूतं यम
स्य योनौ शकुनं भुरण्युं॥ अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शब
लौ साधुना पथा॥ अथा पितॄन्त्सुविदत्राँ अपीहि यमेन ये सधमा
दं मदंति॥ यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा॥
ताभ्यां राजन्परिदेह्येनं स्वस्ति चास्मा अनमीवं च धेहि॥१॥
उरुणसावसुतृपावुदुंबलौ यमस्य दूतौ चरतो जनाँ अनु॥ ॥९४॥

तावस्मभ्यंदृशयेसूर्यायपुनर्दातावसुमद्येहभद्रं॥सोमएकेभ्यःप
वतेघृतमेकउपासते॥येभ्योमधुप्रधावतितांश्चिदेवापिगच्छता
त्॥येयुध्यंतेप्रधनेषुशूरासोयेतनूत्यजः॥येवासहस्रदक्षिणास्ता
ंश्चिदेवापिगच्छतात्॥तपसायेअनाधृष्यास्तपसायेसुवर्गताः॥
तपोयेचक्रिरेमहस्तांश्चिदेवापिगच्छतात्॥अश्मन्वतीरेवतीः
संरभध्वमुत्तिष्ठतप्रतरतासखायः॥अत्राजहामयेअसन्नशेवाः
शिवान्वयमभिवाजानुत्तरेम॥२॥यद्वैदेवस्यसवितुःपवित्रंसह
स्रधारंविततमंतरिक्षे॥येनापुनादिंद्रमनार्त्तमार्त्यैतेनाहंमा
ंसर्वतनुंपुनामि॥याराष्ट्रात्पन्नादपयंतिशाखाअभिमृतानृ

॥अरण
॥१५॥

पतिमिच्छमानाः॥ धातुस्ताः सर्वाः पवनेन पूताः प्रजयास्मान्र
य्यावर्चसा संसृजाथ॥ उद्वयं तमसस्परि पश्यंतो ज्योतिरुत्तरं॥
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं॥ धातापुनातु सवितापुना
तु॥ अग्नेस्तेजसा सूर्यस्य वर्चसा॥३॥ घेहुत्तरे मा होच॥३॥ यंत्वम
ग्निमसमंथा मवधृभा येवपर्कवे॥ इमं तं शमयामसि क्षीरेण चोद
केन च॥ यंत्वमग्ने समदहस्तमु निर्वापया पुनः॥ क्याम्बूरत्र जाय
तां पाकदूर्वा व्यल्कशा॥ शीतिवति ल्हादिकावति॥ मंडूक्यासु संग के ल्हा
मये मं स्वग्निं हर्षय॥ शं ते धन्वन्या आपः शमु ते संत्वनूक्याः॥
शं ते समुद्रिया आपः शमु ते संतु वर्ष्याः॥ शं ते स्रवंतीस्तनुवेश ॥१५॥

मृतेसंतुकृष्यः॥शंतेनीहारोवर्षतुशमुपृष्वावशीयतां॥१॥अवसृजपु
नरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः॥आयुर्वसानउपयातु
शेषꣳसंगच्छतांतनुवाजातवेदः॥संगच्छस्वपितृभिःसꣳस्वधाभिःसमि
ष्टापूर्तेनपरमेव्योमन्॥यत्रभूम्यैवृणसेतत्रगच्छतत्रत्वादेवःसविता
दधातु॥यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः॥अ
ग्निष्टद्विश्वादनृणंकृणोतुसोमश्चयोब्राह्मणआविवेश॥उत्तिष्ठात
स्तनुवꣳसंभरस्वमेहगात्रमवहामाशरीरं॥यत्रभूम्यैवृणसेतत्रग
च्छतत्रत्वादेवःसवितादधातु॥इदंतएकंपरउतएकंतृतीयेनज्योति
षासंविशस्व॥संवेशनस्तनुवैचारुरेधिप्रियोदेवानांपरमेसधस्थे।

अरण उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन्॥ यमेन त्वं यम्या संविदानोत्तमं नाकमधि रोहेमं॥ अश्मन्वती रेवती यद्देवस्य सवितुः पवित्रं याराष्ट्रात्पुनाद्दहूयं तमं सुस्पर्श्यातां पुनातु॥ अस्मात्वमधिजातोस्ययंत्वदधिजायतां॥ अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा॥२॥ अवंशीयतां सुपस्छे पंचच॥४॥ आयातु देवः सुमनोभिरूतिभिर्यमो हवेह प्रयताभिरक्ता॥ आसीदतां सुप्रयते ह बर्हिष्यूर्जीय जात्यै मम शत्रुहत्यै॥ यमेइदं वयत मानेयदेतु प्रबोभरन्मानुषादेवयंतः॥ आसीदतां स्वमु लोकं विदाने स्वासस्छे भवतमिंदवे नः॥ यमाय सोमं सुनुत यमाय जुहुता हविः॥ ॥१६॥

॥१६॥

यमं२ह्यज्ञोगच्छत्यग्निदूतो अरंकृतः॥यमाय घृतवद्धविर्जुहो
त प्रचतिष्ठत॥सनोदेवेष्वायमद्दीर्घमायुः प्रजीवसे॥यमाय म
धुमत्तमं२राज्ञेहव्यंजुहोतन॥इदंनमऋषिभ्यः पूर्वजेभ्यः पूर्वे
भ्यः पथिकृद्भ्यः॥योस्यकौष्ठ्यजगतः पार्थिवस्यैकइद्वशी॥यमंभं
ग्यश्रवोगायय्योराजानपरोध्यः॥यमंगायभंग्यश्रवोयोराजान
परोध्यः॥येनापोनद्योधन्वानियेनद्यौः पृथिवीदृढा॥हिरण्य
कक्ष्यान्सुधुरान्हिरण्याक्षानयःशफान्॥अश्वाननश्यतोदा
नंयमोराजाभितिष्ठति॥यमोदाधारपृथिवींयमोविश्वमिदंज
गत्॥यमायसर्वमित्तस्थेयत्प्राणद्वायुरक्षितं॥यथापंचयथा

अरण
॥१७॥

षडुर्वीस्तथा पंचदश ऋषयः॥ यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिर्विजा
नते॥२॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत्॥ गायत्री त्रिष्टुप्छंदां
सि सर्वा ता यम आहिता॥ अहरहर्नयमानो गामश्वं पुरुषं जगत्॥
वैवस्वतो न तृप्यति पंचभिर्मानवैर्यमः॥ वैवस्वते विविच्यंते यमे
राजनि ते जना॥ ये चेह सत्येनेच्छंते य उ चानृतवादिनः॥ ते राजन्निह
विविच्यंतेथा यंति त्वामुप॥ देवांश्च ये नमस्यंति ब्राह्मणांश्चापचि
त्यति॥३॥ पृथिव्युरुक्षो विजानन्तेन्वेनति॥५ यो वैश्वानरेह विदिर्दं जुहो
मि सा हुस्त्रमुत्सं शतधारमेतं॥ तस्मिन्नेष पितरं पितामहं प्रपिता
महं बिभरत्पिन्वमाने॥ द्रप्सश्चस्कंद पृथिवीमनु द्यामिमं च योनि
यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः॥ अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति॥

॥१७॥

मनुयश्च पूर्वैः ॥ तृतीयंयोनिमनुसंचरंतं द्रप्संजुहोम्यनुसप्तहोत्राः ॥
इमंसमुद्रंशतधारमुत्सं व्युच्यमानंभुवनस्यमध्ये ॥ घृतंदुहा
नामदितिंजनायाग्नेमाहिंसीः परमेव्योमन् ॥ अपेतवीतविचस
र्पतातो येत्रस्थपुराणायेचनूतनाः ॥ अहोभिरद्भिरक्तुभिर्व्यक्तं
यमोददात्यवसानमस्मै ॥ सवितैतानिशरीराणिपृथिव्यैमातुरुप
स्थआदधे ॥ तेभिर्युज्यंतामघ्नियाः ॥ १ ॥ शुनंनौ नाराः शुनंकृषतु
लांगलं ॥ शुनंवरत्राबध्यंतां शुनमष्ट्रामुदिंगय शुनासीराशुन
मस्मासुधत्तं ॥ शुनासीराविमांवाचंयद्दिवि चक्रथुः पयः ॥ तेनेमा
मुपसिंचतं ॥ सीतेवंदामहेत्वार्वाचीसुभगेभव ॥ यथानःसुम

वाहाः शुनं

॥अरण गासंसृयथानः सुफलासंसि॥ सविते तानि शरीराणि पृथ्यै मा
॥१९८॥ तुरुपस्थ आदधे॥ तस्मिन्निर दिते शं भव॥ विमुच्यध्वमघ्नियादेवया
ना अतारिष्म तमसस्पारमस्य॥ ज्योतिरापाम सुवरगन्म॥२॥
प्रवाता वांति पतयंति विद्युत उदोषधीर्जिहते पिन्वते सुवः॥इ
राविश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति॥
यथा यमाय हार्म्यमवपन्पंच मानवाः॥ एवं वपामि हार्म्यं यथासा
म जीवलोके भूरयः॥ चितस्थ परिचित ऊर्ध्वचितः श्रयध्वं पित
रो देवता॥ प्रजापतिर्वः सादयतु तया देवतया॥ आप्यायस्वसं
ते॥३॥ अघ्निया अगन्म स स्वे॥६॥ उत्तैतं मो मि पृथिवीं ॥१९८॥

त्वत्परीमंलोकंनिदधन्मोअहꣳरिषं॥एतांꣳस्थूणांपितरोधारयंतुतेत्रा
यमःसादनातेमिनोतु॥उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवीꣳ
सुशेवां॥ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋत्याउपस्थे॥उच्छ्वं
चस्वपृथिविमाविबाधिथाःसूपायनास्मैभवसूपवंचना॥मातापुत्रंय
थासिचाभ्येनंभूमिरूर्णु॥उच्छ्वंचमानापृथिवीहितिष्ठसिसहस्रंमि
तउपहिश्रयंतां॥तेगृहासोमधुश्चुतोश्वाहास्मैशरणाःसंत्वत्र॥एणी
वि
र्धानाहरिणीरर्जुनीःसंतुधेनवः॥तिलवत्साऊर्जमस्मैदुहानाविश्वा
हासंत्वनपस्फुरंतीः॥१॥एषातेयमसादनेस्वधानिधीयतेगृहे॥अ
क्षितिर्नामतेअसौ॥इदंपितृभ्यःप्रभरेमबर्हिर्देवेभ्योजीवंतउत्तरं

अरण

॥९९॥

भरेम॥ त्वं मारोहासो मे थ्यो भवं यमेन त्वं यम्यो संविदानः॥ मा त्वो
वृक्षो संबाधिष्टं मा मातापृथिवि त्वं॥ पितृन्य स्वर्ग च्छास्येधा संयम
राज्ये॥ मा त्वो वृक्षो संबाधिथां मा मातापृथिवी मही॥ वैवस्वतं हि
गच्छासि यमराज्ये विराजसि नकपूव मारोहे तं नकेनपृश्ने न्विहि॥
सत्वं नकपृ वो भूत्वा संवत्सर प्रतरो त्तेरा॥ सवितैतानि शरीराणि
पृथिव्ये मातुरूप स्व आदधे॥ तेभ्यः पृथिवि शंभव॥ षष्ठो तासूर्यं
ते चक्षुर्गच्छतु वातेमात्मा द्यां च गच्छ पृथिवीं च धर्मणा॥ अपो वा
गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः॥ परं मत्यो भ
नु परेहि पंथां यस्ते स्व इतरो देवयानात्॥ चक्षुष्मते शृण्वते ते ॥९९॥

ब्रवीम्रिमानेः प्रजाऽतीरिषोमोतवीरान्। ऊंवानुःऊऽंहितेघृणिः
शर्मुतिसंत्तोषधीः॥ कल्पेतांमेदिशःशग्माः॥ पृथिव्यास्त्वालोकेसादया
म्युमुष्युशमीसिपितरोदेवता॥ प्रजापतिस्त्वासादयतुतयादेवतया॥
अंतरिक्षस्यत्वादिवस्त्वादिशांत्वानाकस्यत्वापृष्ठेब्रध्नस्यत्वाविष्टपेसा
दयाम्युमुष्युशमीसिपितरोदेवता॥ प्रजापतिस्त्वासादयतुतयादेव
तया॥३॥ अनपस्फुरंतीरूर्जेरदेवतयाद्वेच॥७॥ अपूपवान्घृतवांऽ
श्चरुरेहसीदतूत्तस्तुवन्पृथिवीद्यामुतोपरि॥ योनिकृतःपथिकृतः
सपर्येतयेदेवानांघृतभागाइहस्थ॥ एषातेयमसादनेस्वधानिधी
यतेगृहेसो॥ दशाक्षराताऽंरक्षस्वतांगोपायस्वतांतेपरिददामि

(अरण ॥१००॥

तस्यांत्वामादंभन्त्पितरोदेवता॥प्रजापतिस्त्वासादयतुतयादेवत
या॥अपूपवान्घृतवान्क्षीरवान्दधिवान्मधुमांश्चरुरेहसीदतूत
भ्नुवन्पृथिवींद्यामुतोपरि॥योनिकृतःसपर्यतुयेदेवानांहुतभा
गाःक्षीरभागादधिभागामधुभागाइहस्थ॥एषातेयमसादनेस्वधा
निधीयतेगृहेसौ॥शताक्षरासहस्राक्षरायुताक्षराच्युताक्षरयुतां
रक्षस्वतांगोपायस्वतांतेपरिददामितस्यांत्वामादंभन्त्पितरोदेवता॥
प्रजापतिस्त्वासादयतुतयादेवतया॥१॥अपूपवानसोदश॥८॥
पलास्तेस्वधाअमृताःकरोमियास्तेधानाःपरिकिराम्यत्र॥ता
स्तेयमःपितृभिःसंविदानोत्रधेनूःकामदुघाःकरोतु॥त्वामर्जु ॥१००॥
पथिकृतः

नोषधीनां पयोभ्रुञाणाइद्विदुः॥ तासांत्वा मध्यादादद्दे चरुभ्यो अ
पिधातवे॥ दूर्वाणां स्तंबमाहरै तां प्रियतमां मम॥ इमां दिशं म
नुष्याणां भूयिष्ठानुविरोहतु॥ काशानां स्तंबमाहर रक्षसाम
पहत्यै॥ य एतस्यै दिशः पराभवन्नघायवो यथा तेन भवान्पुनः॥
दर्भाणां स्तंबमाहर पितृणामोषधीं प्रियां॥ अन्वस्यै मूलं जीवा
दनु कांडमथो फलं॥१॥ लोकं पृणता अस्य सूददोहसः॥ शंवालुः
शंहितेच णिः शम्भुतिसंत्वोषधीः॥ कल्पेतां ते दिशः सर्वाः॥ इ
दमेवमेतोपरा मास्ति भारामकांचन॥ तथा तद्भ्विभ्यां कृतं मित्रे
णवरुणेन च॥ वरणो वारयादिदं देवो वनस्पतिः॥ आर्सेई

अरण
॥१०१॥

निर्ऋत्यै दिशे स्वाहा ॥ ...

निर्ऋत्यै त्ये ह्रै पाश्चुवनुस्मृतिः ॥ चिच्छं तिर स्मि विधौ र यास्मद् पाहे षाः
सिश्च मिश्च मयास्मद् पाहे षाः सियुव पूब यास्मद् पाहे षाः सि ॥
पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ दिशो गच्छ सुवर्गच्छ
दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो वा गच्छ यदि तत्र ते हित
मोषधीषु प्रतितिष्ठा शरीरैः ॥ अस्मन्न्यतीरेव त्रियेहे देवस्येस
विलुः पवित्रं या राष्ट्रा सन्नादुद्धयं तं मसुस्परि ध्याता पुनातु ॥२॥
अथो फलं पुनातु ॥९॥ आरोहुता सुजुरसं गणानान्ननुपूर्वं
यतमाना यतिष्ठ ॥ इह त्वष्टा सुजनिमा सुरत्नो दीर्घमायुः के
रतु जीवसे वः ॥ यथा हान्यनुपूर्वं भवन्ति यथ त्र्से वेत्तुमि र्यं ॥१०१॥
ति



न्य

ल्कृप्ताः॥यथानपूर्वमपरोजहात्येवाधातरायूंषिकल्पयेषां॥
नहितेअग्नेतनुवैक्रूरंचकारमर्त्यः॥कपिर्बभस्तितेजनंपुनर्ज
रायुगौरिव॥अपनःशोशुचदघमग्नेशुशुग्ध्यारयिं॥अपनःशो
शुचदघंमृत्यवेस्वाहा॥अनडुाहमन्वारभामहेस्वस्तये॥सनइं
द्रइवदेवेभ्योवन्हिःसंपारणोभव॥१॥इमेजीवाविमृतैरावव
र्तिन्नभूद्भद्रादेवहूतिर्नोअद्य॥प्रांचोगामनृतयेहसायद्राघी
यआयुःप्रतरांदधानाः॥मृत्योःपदंयोपयंतोयदैमद्राघीयआ
युःप्रतरांदधानाः॥आप्यायमानाःप्रजयाधनेनशुद्धाःपूता
भवथयज्ञियासः॥इमंजीवेभ्यःपरिधिंदधामिमानोनुगादप

अरण रोअर्धमेतं॥शतंजीवंतुशारदःपूरूचीस्तिरोमृत्युंदंघ्रहेपर्वते

॥१०२॥ न॥इमानारीरविधवाःसुपत्नीरांजनेनसर्पिषासंमृशंतां॥अ अनुभवो

नमीवाःसुशेवाआरोहंतुजनयोयोनिमग्ने॥यदांजनंत्रैककु

दंजातंहिमवतस्परि॥तेनामृतस्यमूलेनारातीर्जंभयामसि॥

यथात्वमुद्भिनत्स्योषधेपृथिव्याअधि॥एवमिमउद्भिंदंतुकीर्त्यो

यशसाब्रह्मवर्चसेन॥अग्नेस्यजास्मद्घाद्द्वेषांसियुवोसियुव

यास्मद्घाद्वेषांसि॥२॥भवजंभयामसित्रीणिच॥१०॥अप

नःशोशुचद्घमग्नेशुशुग्ध्यारयिं॥अपनःशोशुचद्घं॥सुक्षे

त्रियासुगातुयावसूयाचयजामहे॥अपनःशोशुचद्घं॥प्रयद्भं ॥१०२॥

दिष्ठ एषां मास्माकां सश्च सूरयः ॥ अप नः शोशुचदघं ॥ प्रयदग्नेः सहस्वतो विश्वतोयंति सूरयः ॥ अप नः शोशुचदघं ॥ प्रयत्ते अग्ने सूरयो जायेमहि प्रतेवयं ॥ अप नः शोशुचदघं ॥ १ ॥ त्वं हि विश्वतो मुख विश्वतः परिभूरसि ॥ अप नः शोशुचदघं ॥ द्विषो नो विश्वतो मुखाति नावेव पारय ॥ अप नः शोशुचदघं ॥ स नः सिंधुमिव नावयाति पर्षा स्वस्तये ॥ अप नः शोशुचदघं ॥ [illegible]णा दिवयुती रपास्मत्स्यंदतामघं ॥ अप नः शोशुचदघं ॥ उद्धृतादुद्रुकानीवापास्मत्स्यंदतामघं ॥ अप नः शोशुचदघं ॥ आनंदाय प्रमोदाय पुनरागां स्वान्गृहान् ॥ अप नः शोशुचदघं ॥ नवेतत्प्रमीय

अरण ॥१०३॥

ते गोरश्वः पुरुषः पशुः ॥ यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कं
मपेतः शोशुचदूयं ॥२॥ अथ षट्पंचत्वारिंच ॥११॥ अपश्यास्यु
वतिमाचरंतीं मृताय जीवां परिणीयमानां ॥ अंधेन यात्तमसा प्रा
वृतासि प्राचीमवाचीमवयन्नरिष्ट्यै ॥ मयैतां माऽस्तां स्त्रियमा
णा देवी सती पितृलोकं यदैषि ॥ विश्ववारा नभसा संव्ययस्यु
भौ लोकौ पयसावृणीहि ॥ रयिष्ठामग्निं मधुमंतमूर्मिणमूर्जः
संतं त्वा पयसोपसंसदेम ॥ सं रय्या समु वर्चसा सचस्वा नः
स्वस्तये ॥ ये जीवा ये च मृता ये जाता ये च यज्ञियाः ॥ तेभ्यो घृतस्य
धारयितुं मधुधारा व्युंदती ॥ माता रुद्राणां दुहिता वसूनां ॥१०३॥

स्वसादित्यानाममृतस्यनाभिः॥प्रनुवोचंचिकितुषेजनायमागामना
गामदितिंवधिष्टपिबतूदकंतृणान्यत्तु॥ओमुत्सृजत॥ ॥११॥ ॥
वधिष्टेदेच॥१२॥पुरेषुवाऽसंप्रविद्धात्मुवनस्याभ्यावर्त्स्याजोभागो
यंवैचतुश्चत्वारिंशपएतस्यलत्वंचप्रकेतुनेदंतेनाकेसुपर्णेयेयु
ध्यंतेतल्पसाश्मन्वतीरेवतीःसऽरभध्वमष्टाविंशतिर्येतेयतत्ति
ष्ठातइदंतत्तुत्तिष्ठमेषस्मिन्यद्वाउद्वयमयंपंचविंशतिरायात्तुत्रिंशे
श्वानरेतस्मिन्नुप्सइममपेलाहोभिर्युज्यंतामघ्नियाअदितेपारंखआ
प्यायस्वसप्तविंशतिरुत्तेतभ्नोम्यक्षितिस्त्तभ्यःपृथिविपदोता
परंमोऽशाग्माःपृथिव्याअंतरिक्षस्यद्वात्रिंशदपूपवानसोदशाह

अरण
॥१०४॥

तद्देशोतास्तैत्ते दिशः सर्वा अश्मन्विंशतिरारोहतन्नुवैक्रूरं चुकाम्रुप
नर्मृत्यवे मानोहुगाहृन्नहङ्मानारीः परित्र यो विंशतिरपेनः सुक्षे
त्रियाप्रयद्दं दिक्षुः प्रयदग्नेः प्रयत्नैअग्नेत्वं हि द्धुपुः सनः सिंधुमा
र्पः प्रवणाद्दुहुनादोनंदायनवैतन्नचतुर्विंशतिरपश्यामावर्णो
हिद्वादशद्वादश॥ ॥परेयुवांसं सुमायोत्वेतास्तेसप्तविंशतिः
॥२७॥संत्वा सिंचामि यजुषा प्रजामायुर्धनंच॥ॐ शांतिः शां
तिः शांतिः हरिः ओम्॥ ॥श्री॥ ॥छ॥ ॥छ॥
शके सत्राशे एकाहात्तर सौम्यनाम संवत्छरे जेष्ठ शुध्य द्वादशि मं
दवासरे॥हस्ताक्षर हरि मोरेश्वर सहस्त्रबुध्ये राहाणार बडोदे॥

शके १८०१

॥१०४॥

श्रीगणेशायनमः॥हरिःओम्॥शंनोमित्रःशंवरुणः॥शंनोभवत्वर्यमा॥शंनु
इंद्रोबृहस्पतिः॥शंनोविष्णुरुरुक्रमः॥नमोब्रह्मणे॥नमस्तेवायो॥त्वमेव
प्रत्यक्षंब्रह्मासि॥त्वमेवप्रत्यक्षंब्रह्मवदिष्यामि॥ऋतंवदिष्यामि॥सत्यंवदि
ष्यामि॥तन्मामवतु॥तद्वक्तारमवतु॥अवतुमां॥अवतुवक्तारं॥ॐ शांतिः
शांतिःशांतिः॥ओम्॥शीक्षांव्याख्यास्यामः॥वर्णस्वरः॥मात्राबलं॥सा
मसंतानः॥इत्युक्तःशीक्षाध्यायः॥१॥शीक्षांपंच॥१॥सहनौयशः॥स
हनौब्रह्मवर्चसं॥अथातःसंहितायाउपनिषदंव्याख्यास्यामः॥पंच
स्वधिकरणेषु॥अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मं॥
तामहासंहिताइत्याचक्षते॥अथाधिलोकं॥पृथिवीपूर्वरूपं॥द्यौरुत्तररू

॥अरण
॥१०५॥

पं॥आकाशः संधिः॥१॥वायुः संधानं॥इत्यधिलोकं॥अथाधिज्योतिषं॥अ
ग्निः पूर्वरूपं॥आदित्य उत्तररूपं॥आपः संधिः॥वैद्युतः संधानं॥इत्यधिज्यो
तिषं॥अथाधिविद्यं॥आचार्यः पूर्वरूपं॥२॥अंतेवास्युत्तररूपं॥विद्या
संधिः॥प्रवचनꣳ संधानं॥इत्यधिविद्यं॥अथाधिप्रजं॥माता पूर्वरूपं॥
पितोत्तररूपं॥प्रजा संधिः॥प्रजननꣳ संधानं॥इत्यधिप्रजं॥३॥अथाध्या
त्मं॥अधरा हनुः पूर्वरूपं॥उत्तरा हनुरुत्तररूपं॥वाक् संधिः॥जिह्वा संधा
नं॥इत्यध्यात्मं॥इतीमा महासꣳहिताः॥य एवमेता महासꣳहिता व्याख्या
ता वेद॥संधीयते प्रजया पशुभिः॥ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोके
न॥४॥संधिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन॥२॥यश्छंदसामृषभ

॥

मो विश्वरूपः॥ छंदोभ्योध्यमृतात्संबभूव॥ स मेंद्रो मेधया स्पृणोतु॥ अमृ
तस्य देव धारणो भूयासं॥ शरीरं मे विचर्षणं॥ जिह्वा मे मधुमत्तमा॥
कर्णाभ्यां भूरि विश्रुवं॥ ब्रह्मणः कोशोसि मेधया पिहितः॥ श्रुतं मे गो
पाय॥ आवहंती वितन्वाना॥१॥ कुर्वाणाचीरमात्मनः॥ वासांसि मम
गावश्च॥ अन्नपाने च सर्वदा॥ ततो मे श्रियमावह॥ लोमशां पशुभिः स
ह स्वाहा॥ आमायंतु ब्रह्मचारिणः स्वाहा॥ विमायंतु ब्रह्मचारिणः स्वाहा॥
प्रमायंतु ब्रह्मचारिणः स्वाहा दमायंतु ब्रह्मचारिणः स्वाहा॥ शमायंतु ब्र
ह्मचारिणः स्वाहा॥२॥ यशो जने सानि स्वाहा॥ श्रेयान्वस्यसोसानि स्वा
हा॥ तं त्वा भग प्रविशानि स्वाहा॥ स मा भग प्रविश स्वाहा॥ तस्मिन्त्सह

स्त्रशाखेनिमगाहंत्वयिमृजेस्वाहा॥यथापःप्रवतायंति॥यथामासाअहर्ज्जरं
एवंमांब्रह्मचारिणः॥धातुरायंतुसर्वतःस्वाहा॥प्रतिवेशोसिप्रमाभाहि
प्रमापद्यस्व॥३॥वितन्वानाशमायंतुब्रह्मचारिणःस्वाहाधातुरायंतुसर्व
तःस्वाहेकेच॥३॥भूर्भुवःसुवरितिवाएतास्तिस्त्रोव्याहृतयः॥तासामुह
स्मैतांचतुर्थी॥माहाचमस्यःप्रवेदयते॥महइति॥तद्ब्रह्म॥सआत्मा॥अं
गान्यन्यादेवताः॥भूरितिवाअयंलोकः॥भुवइत्यंतरिक्षं॥सुवरित्यसौलो
कः॥१॥महइत्यादित्यः॥आदित्येनवावसर्वेलोकामहीयंते॥भूरिति
वाअग्निः॥भुवइतिवायुः॥सुवरित्यादित्यः॥महइतिचंद्रमाः॥चंद्र
मसावावसर्वाणिज्योतींषिमहीयंते॥भूरितिवाऋचः॥भुवइतिसा

मानि ॥ सुवरिति यजूंषि ॥ २ ॥ मह इति ब्रह्म ॥ ब्रह्मणा वाव सर्वे वेदा म
हीयंते ॥ भूरिति वै प्राणः ॥ भुव इत्यपानः ॥ सुवरिति व्यानः ॥ मह इत्यन्नं ॥
अन्नेन वाव सर्वे प्राणा महीयंते ॥ ता वा एताश्चतस्रश्चतुर्धा ॥ चतस्रश्च
तस्रो व्याहृतयः ॥ ता यो वेद ॥ स वेद ब्रह्म ॥ सर्वेस्मै देवा बलिमावहंति ॥ ५ ॥
असौ लोको यजूंषि वेदुह्वेच ॥ ५ ॥ स य एषोंतर्हृदय आकाशः ॥ तस्मि
न्नयं पुरुषो मनोमयः ॥ अमृतो हिरण्मयः ॥ अंतरेण तालुके ॥ य एष
स्तन इवावलंबते ॥ सेंद्रयोनिः ॥ यत्रासौ केशांतो विवर्तते ॥ व्यपोह्य
शीर्षकपाले ॥ भूरित्यग्नौ प्रतितिष्ठति ॥ भुव इति वायौ ॥ १ ॥ सुवरित्या
दित्ये ॥ मह इति ब्रह्मणि ॥ आप्नोति स्वाराज्यं ॥ आप्नोति मनसस्पतिं ॥

अरण

॥१०७॥ वाक्पतिश्चक्षुष्पतिः॥ श्रोत्रंपतिर्विज्ञानपतिः॥ एतत्ततो भवति॥ आ
काशशरीरं ब्रह्म॥ सत्यात्म प्राणारामं मनआनंदं॥ शांतिसमृद्धममृतं॥
इति प्राचीनयोग्योपास्व॥२॥ वायावमृतमेकंच॥५॥ पृथिव्यंतरिक्षंद्यौ
र्दिशोवांतरदिशाः॥ अग्निर्वायुरादित्यश्चंद्रमानक्षत्राणि॥ आपओ
षधयोवनस्पतयआकाशआत्मा॥ इत्यधिभूतं॥ अथाध्यात्मं॥
प्राणोव्यानोपानोउदानः समानः॥ चक्षुः श्रोत्रंमनोवाक्त्वक्॥ चर्म

स५ मांसंस्नावास्थिमज्जा॥ एतदधिविधायऋषिरवोचत्॥ पांक्तं वाइदं
सर्वं॥ पांक्तेनैवपांक्तंस्पृणोतीति॥१॥ सर्वमेकंच॥६॥ ओमितिब्र
ह्म॥ ओमितीदंसर्वं॥ ओमित्येतदनुकृतिहस्मवाअप्योश्रावये ॥१०७॥

त्याश्रावयंति ॥ ओमिति सामानि गायंति ॥ ओं शोमिति शस्त्राणि शंसंति ॥
ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति ॥ ओमिति ब्रह्मा प्रसौति ॥ ओमित्य
ग्निहोत्रमनुजानाति ॥ ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति ॥ ब्रह्मै
वोपाप्नोति ॥ १ ॥ ओं दश ॥ ७ ॥ ऋतं च स्वाध्यायप्रवचने च ॥ सत्यं च स्वाध्या
यप्रवचने च ॥ तपश्च स्वाध्यायप्रवचने च ॥ दमश्च स्वाध्यायप्रवचने च ॥
शमश्च स्वाध्यायप्रवचने च ॥ अग्नयश्च स्वाध्यायप्रवचने च ॥ अग्निहो
त्रं च स्वाध्यायप्रवचने च ॥ अतिथयश्च स्वाध्यायप्रवचने च ॥ मानुषं च
स्वाध्यायप्रवचने च ॥ प्रजा च स्वाध्यायप्रवचने च ॥ प्रजनश्च स्वाध्यायप्र
वचने च ॥ प्रजातिश्च स्वाध्यायप्रवचने च ॥ सत्यमिति सत्यवचा राथीत

अरण ॥१०८॥

रः॥तप इति तपोनित्यः पौरुशिष्टिः॥स्वाध्यायप्रवचने एवेति नाको मौद्
गल्यः॥तद्धि तपस्तद्धि तपः॥१॥प्रजा च स्वाध्यायप्रवचने च षट् ॥९॥
अहं वृक्षस्य रेरिवा।कीर्त्तिः पृष्ठं गिरेरिव।ऊर्ध्वपवित्रो वाजिनीव स्वमृत
मस्मि।द्रविणं सवर्चसं॥सुमेधा अमृतोक्षितः॥इति त्रिशंकोर्वेदानुव
चनं॥१॥अहं षट्॥१०॥वेदमनूच्याचार्योंतेवासिनमनुशास्ति॥स
त्यं वद॥धर्मं चर॥स्वाध्यायान्मा प्रमदः॥आचार्याय प्रियं धनमाहृत्य
प्रजातंतुं मा व्यवच्छेत्सीः॥सत्यान्न प्रमदितव्यं॥धर्मान्न प्रमदितव्यं॥कु
शलान्न प्रमदितव्यं॥भूत्यै न प्रमदितव्यं॥स्वाध्यायप्रवचनाभ्यां न प्र
मदितव्यं॥देवपितृकार्याभ्यां न प्रमदितव्यं॥मातृदेवो भव॥पितृदेवो ॥१०८॥

भव॥ आचार्यदेवो भव॥ अतिथिदेवो भव॥ यान्यनवद्यानि कर्माणि॥ ता
निसेवितव्यानि॥ नो इतराणि॥ यान्यस्माकं सुचरितानि॥ तानि त्वयो
पास्यानि॥२॥ नो इतराणि॥ ये के चास्मच्छ्रेयांसो ब्राह्मणाः॥ तेषां त्वया
सनेन प्रश्वशितव्यं॥ श्रद्धयादेयं॥ अश्रद्धयादेयं॥ श्रियादेयं॥ भियादेयं॥

ह्रियादेयं

संविदादेयं॥ अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्॥३॥
ये तत्र ब्राह्मणाः संमर्शिनः॥ युक्ता आयुक्ताः॥ अलूक्षा धर्मकामास्युः॥

त्र

यथा ते तत्र वर्तेरन्॥ तथा तत्र वर्तेथाः॥ अथाभ्याख्यातेषु॥ ये तत्र ब्राह्म
णाः संमर्शिनः॥ युक्ता आयुक्ताः॥ अलूक्षा धर्मकामास्युः॥ यथा ते तेषु
वर्तेरन्॥ तथा तेषु वर्तेथाः॥ एष आदेशः॥ एष उपदेशः॥ एषा वेदोपनि

अरण
॥१०९॥

वत्॥ एतदनुशासनं॥ एवमुपासितव्यं॥ एवमुचैतदुपास्यं॥४॥ स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यं ता नित्ययोपास्यानि स्यातेषुवर्त्तेरन्तसुत चु॥१०॥ शंनो मित्रः शंवरुणः॥ शंनो भवत्वर्यमा॥ शंन इन्द्रो बृहस्पतिः॥ शंनो विष्णुरुरुक्रमः॥ नमो ब्रह्मणे॥ नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि॥ त्वामेव प्रत्यक्षं ब्रह्मवादिषं॥ ऋतमवादिषं॥ तन्मामावीत्॥ तद्वक्तारमावीत्॥ आवीन्मां॥ आवीद्वक्तारं॥ ओं शांतिः शांतिः शांतिः॥ ॥१२॥

॥ सत्यमवादिषं पंच च॥ ॥११॥ ॥ शंनः शीक्षां सहनो यश्छंदसां भूः स यः पृथिव्योमित्यृतं चाहं वेदमनूच्य शंनो द्वादश॥ ॥ ॥१०९॥

शंन्नो महइत्यादित्यो नो इतराणि त्रयो विंशतिः॥ ॥२३॥ ॥



सत्यमेवादिषं॥

श्रीगणेशायनमः ॥ हरिः ॐ ॥ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवा
वहै ॥ तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ ॥
ब्रह्मविदाप्नोतिपरं ॥ तदेषाभ्युक्ता ॥ सत्यंज्ञानमनंतंब्रह्म ॥ योवेदनिहितंगु
हायांपरमेव्योमन् ॥ सोश्नुतेसर्वान्कामान्सह ॥ ब्रह्मणाविपश्चितेति ॥
तस्माद्वाएतस्मादात्मनआकाशःसंभूतः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अ
ग्नेरापः ॥ अद्भ्यःपृथिवी ॥ पृथिव्याओषधयः ॥ ओषधीभ्योन्नं ॥ अन्नात्पुरुषः
॥ सवाएषपुरुषोन्नरसमयः ॥ तस्येदमेवशिरः ॥ अयंदक्षिणःपक्षः ॥ अयमु
त्तरःपक्षः ॥ अयमात्मा ॥ इदंपुच्छंप्रतिष्ठा ॥ तदप्येषश्लोकोभवति ॥ १ ॥ अ
न्नाद्वैप्रजाःप्रजायंते ॥ याःकाश्चपृथिवींश्रिताः ॥ अथोअन्नेनैवजीवंति
॥ अथैनदपियंत्यंततः ॥ अन्नंहिभूतानांज्येष्ठं ॥ तस्मात्सर्वौषधमुच्यते ॥

उ.तं
११०।।

सर्वंवैतेन्नमाप्नुवंति।।येन्नंब्रह्मोपासते।।अन्नंहिभूतानांज्येष्ठं।।तस्मात्सर्वौ
षधमुच्यते।।अन्नाद्भूतानिजायंते।।जातान्यन्नेनवर्धंते।।अद्यतेत्तिचभूतानि
।।तस्मादन्नंतदुच्यतइति।।तस्माद्वाएतस्मादन्नरसमयात्।।अन्योंतरआत्मा
प्राणमयः।।तेनैषपूर्णः।।सवाएषपुरुषविधएव।।तस्यपुरुषविधतां।।अन्व
यंपुरुषविधः।।तस्यप्राणएवशिरः।।व्यानोदक्षिणःपक्षः।।अपानौउत्तरःप
क्षः।।आकाशआत्मा।।पृथिवीपुच्छंप्रतिष्ठा।।तदप्येषश्लोकोभवति।।२।।
प्राणंदेवाअनुप्राणंति।।मनुष्याःपशवश्चये।।प्राणोहिभूतानामायुः।।(प्राणो
हिभूतानामायुः।।)तस्मात्सर्वायुषमुच्यतइति।।तस्यैषएवशारीरआत्मा।।
यःपूर्वस्य।।तस्माद्वाएतस्मात्प्राणमयात्।।अन्योंतरआत्मामनोमयः।।

राम
३१०।।

तस्मात्सर्वायुषमुच्यते।।सर्वमेवतआयुर्यंति।।येप्राणंब्रह्मोपासते।।प्राणोहिभूतानामायुः।।२

तेनैषपूर्णः॥सवाएषपुरुषविधएव॥तस्यपुरुषविधतां॥अन्वयंपुरुषविधः
॥तस्ययजुरेवशिरः॥ऋग्दक्षिणःपक्षः॥सामोत्तरःपक्षः॥आदेशआत्मा
॥अथर्वांगिरसःपुच्छंप्रतिष्ठा॥तदप्येषश्लोकोभवति॥३॥यतोवाचोनि
वर्तते॥अप्राप्यमनसासह॥आनंदंब्रह्मणोविद्वान्॥नबिभेतिकदाच
नेति॥तस्यैषएवशारीरआत्मा॥यःपूर्वस्य॥तस्माद्वाएतस्मान्मनोम
यात्॥अन्योंतरआत्माविज्ञानमयः॥तेनैषपूर्णः॥सवाएषपुरुषवि
धएव॥तस्यपुरुषविधतां॥अन्वयंपुरुषविधः॥तस्यश्रद्धैवशिरः॥ऋ
तंदक्षिणःपक्षः॥सत्यमुत्तरःपक्षः॥योगआत्मा॥महःपुच्छंप्रतिष्ठा॥
तदप्येषश्लोकोभवति॥४॥विज्ञानंयज्ञंतनुते॥कर्माणितनुतेपिच॥

तै॰

॥११॥

विज्ञानं देवाः सर्वे ॥ ब्रह्मज्येष्ठमुपासते ॥ विज्ञानं ब्रह्म चेद्वेद ॥ तस्माच्चेन्न प्रमा
द्यति ॥ शरीरे पाप्मनो हित्वा ॥ सर्वान्कामान्त्समश्नुत इति ॥ तस्यैष एव शा
रीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतस्माद्विज्ञानमयात् ॥ अन्योंतर आत्मा
नंदमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषविधतां ॥ अ
न्वयं पुरुषविधः ॥ तस्य प्रियमेव शिरः ॥ मोदो दक्षिणः पक्षः ॥ प्रमोद उत्त
रः पक्षः ॥ आनंद आत्मा ॥ ब्रह्म पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥
॥५॥ असन्नेव स भवति ॥ असद्ब्रह्मेति वेद चेत् ॥ अस्ति ब्रह्मेति चेद्वेद ॥
संतमेनं ततो विदुरिति ॥ तस्यैष एव शारीर आत्मा ॥ यः पूर्वस्य ॥ अथातो
नुप्रश्नाः ॥ उताविद्वानमुं लोकं प्रेत्य ॥ कश्चन गच्छती३ ॥ आहो विद्वानमुं

राम

॥११॥

लोकंप्रेत्य॥कश्चित्समश्नुता३उ॥सोकामयत॥बहुस्यांप्रजायेयेति॥सत
पोतप्यत॥सतपस्तप्त्वा॥इदꣳसर्वमसृजत॥यदिदंकिंच॥तत्सृष्ट्वा॥त
देवानुप्राविशत्॥तदनुप्रविश्य॥सच्चत्यच्चाभवत्॥निरुक्तंचानिरुक्तंच
॥निलयनंचानिलयनंच॥विज्ञानंचाविज्ञानंच॥सत्यंचानृतंचसत्यमभवत्॥
यदिदंकिंच॥तत्सत्यमित्याचक्षते॥तदप्येषश्लोकोभवति॥६॥असद्वाइ
दमग्रआसीत्॥ततोवैसदजायत॥तदात्मानꣳस्वयमकुरुत॥तस्मात्त
त्सुकृतमुच्यतइति॥यद्वैतत्सुकृतं॥रसोवैसः॥रसꣳह्येवायंलब्ध्वानंदी
भवति॥कोह्येवान्यात्कःप्राण्यात्॥यदेषआकाशआनंदोनस्यात्॥एष
ह्येवानंदयाति॥यदाह्येवैषएतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयंप्र

२त

उ.त
११२॥

तिष्ठां विंदते ॥ अथ सोभयं गतो भवति ॥ यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरु
ते ॥ अथ तस्य भयं भवति ॥ तत्त्वेव भयं विदुषोमन्वानस्य ॥ तदप्येष श्लोको भ
वति ॥ ७ ॥ भीषास्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीषास्मादग्निश्चेंद्र
श्च ॥ मृत्युर्धावति पंचम इति ॥ सैषानंदस्य मीमांसा भवति ॥ युवा स्यात्साधु
युवाध्यायकः ॥ आशिष्ठो दृढिष्ठो बलिष्ठः ॥ तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा
स्यात् ॥ स एको मानुष आनंदः ॥ ते ये शतं मानुषा आनंदाः ॥ स एको मनुष्यगं
धर्वाणामानंदः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं मनुष्यगंधर्वाणामा
नंदाः ॥ स एको देवगंधर्वाणामानंदः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये श
तं देवगंधर्वाणामानंदाः ॥ स एकः पितॄणां चिरलोकलोकानामानंदः ॥ श्रो

राम
३
११२।

त्रियस्यचामहतुस्य॥तेयेशतंपितॄणांचिरलोकलोकानामानंदाः॥सएक
आजानजानांदेवानामानंदः॥श्रोत्रियस्यचाकामहतुस्य॥तेयेशतमाजा
नजानांदेवानामानंदाः॥सएकःकर्मदेवानांदेवानामानंदः॥येकर्मणा
देवानपियंति॥श्रोत्रियस्यचाकामहतुस्य॥तेयेशतंकर्मदेवानांदेवानां
मानंदाः॥सएकोदेवानामानंदः॥श्रोत्रियचामहतुस्य॥तेयेशतंदेवा का
नामानंदाः॥सएकइंद्रस्यानंदः॥श्रोत्रियस्यचाकामहतुस्य॥तेयेशत
मिंद्रस्यानंदाः॥सएकोबृहस्पतेरानंदः॥श्रोत्रियस्यचाकामहतुस्य॥तेये
शतंबृहस्पतेरानंदाः॥सएकःप्रजापतेरानंदः॥श्रोत्रियस्यचाकामहतु
स्य॥तेयेशतंप्रजापतेरानंदाः॥सएकोब्रह्मणआनंदः॥श्रोत्रियस्यचा

उ० तू
११३॥
४

कामहं तस्य॥ सयश्चायं पुरुषे॥ यश्चासावादित्ये॥ स एकः॥ स य एवंवित्।
अस्माल्लोकात्प्रेत्य॥ एतमन्नमयमात्मानमुपसंक्रामति॥ एतं प्राणमय
मात्मानमुपसंक्रामति॥ एतं मनोमयमात्मानमुपसंक्रामति॥ एतं वि
ज्ञानमयमात्मानमुपसंक्रामति॥ एतमानंदमयमात्मानमुपसंक्राम
ति॥ तदप्येष श्लोको भवति॥ ८॥ यतो वाचो निवर्तंते॥ अप्राप्य मनसा
सह॥ आनंदं ब्रह्मणो विद्वान्॥ न बिभेति कुतश्चनेति॥ एतं ह वा
वनतपति॥ किमहं साधु नाकरवं॥ किमहं पापमकरवमिति॥ स य
एवं विद्वानेते आत्मानं स्पृणुते॥ उभे ह्येवैष एते आत्मानं स्पृणुते॥
य एवं वेद॥ इत्युपनिषत्॥ ९॥ १॥ ब्रह्मविदिदमयमिदमेकेचिं श

राम्
॥ ४११३॥

तिरन्नादन्नरसमयात्प्राणो व्यानोपान आकाशः पृथिवी पुच्छं षड्विंशतिः प्राणं यजुरृग्सामादेशोथर्वांगिरसः पुच्छं द्वाविंशतिर्यतः श्रद्धर्त्तं सत्यं योगो महौ ष्टादश विज्ञानं प्रियं मोदः प्रमोद आनंदो ब्रह्म पुच्छं द्वाविंश तिरसन्नेवाष्टाविंशतिरसखोडश भीषास्मान्मानुषो मनुष्य गंधर्वा णां देवगंधर्वाणां पितॄणां चिरलोकलोकानामाजानजानां कर्मदेवानां देवानामिंद्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स यश्चसंक्रामत्येकपंचाशद्यतः कुतश्चेकादशनवे ॥ ॐ सहनाववतु ॥ सहनौ भुनक्तु ॥ सहवीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शांतिः शांतिः शांतिः ॥ ॐ ॥ सहनाववतु ॥ सहनौ भुनक्तु ॥ सहवीर्यं करवावहै ॥ तेजस्वि

अर०
५
॥१२४॥

नावधीतमस्तु मा विद्विषावहै ॥ ॐ शांतिः शांतिः शांतिः ॥ ॐ भृगुर्वै वारु
णिः ॥ वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तस्मा एतत्प्रो
वाच ॥ अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ॥ तं होवाच ॥ यतो वा इमा
नि भूतानि जायंते ॥ येन जातानि जीवंति ॥ यत्प्रयंत्यभिसंविशंति ॥ त
द्विजिज्ञासस्व ॥ तद्ब्रह्मेति ॥ स तपोतप्यत ॥ स तपस्तप्त्वा ॥ १ ॥ अन्नं
ब्रह्मेति व्यजानात् ॥ अन्नाद्ध्येव खल्विमानि भूतानि जायंते ॥ अ
न्नेन जातानि जीवंति ॥ अन्नं प्रयंत्यभिसंविशंतीति ॥ तद्विज्ञाय ॥
पुनरेव वरुणं पितरमुपससार ॥ अधीहि भगवो ब्रह्मेति ॥ तं हो
वाच ॥ तपसा ब्रह्म विजिज्ञासस्व ॥ तपो ब्रह्मेति ॥ स तपोतप्यत ॥

राम
५
॥१२४॥

सतपस्तप्त्वा ॥ २ ॥ प्राणोब्रह्मेतिव्यजानात् ॥ प्राणाद्ध्येवखल्विमानिभू
तानिजायंते ॥ प्राणेनजातानिजीवंति ॥ प्राणंप्रयंत्यभिसंविशंतीति ॥
तद्विज्ञाय ॥ पुनरेववरुणंपितरमुपससार ॥ अधीहिभगवोब्रह्मेति ॥
तंहोवाच ॥ तपसाब्रह्मविजिज्ञासस्व ॥ तपोब्रह्मेति ॥ सतपोतप्यत ॥
सतपस्तप्त्वा ॥ ३ ॥ मनोब्रह्मेतिव्यजानात् ॥ मनसोह्येवखल्विमानिभू
तानिजायंते ॥ मनसाजातानिजीवंति ॥ मनःप्रयंत्यभिसंविशंतीति ॥ त
द्विज्ञाय ॥ पुनरेववरुणंपितरमुपससार ॥ अधीहिभगवोब्रह्मेति ॥
तंहोवाच ॥ तपसाब्रह्मविजिज्ञासस्व ॥ तपोब्रह्मेति ॥ सतपोतप्यत ॥
सतपस्तप्त्वा ॥ ४ ॥ विज्ञानंब्रह्मेतिव्यजानात् ॥ विज्ञानाद्ध्येवखल्विमा

अ० १९५ ।। ६

निभूतानिजायंते ।।विज्ञानेनजातानिजीवंति ।।विज्ञानंप्रयंत्यभिसंविशंती
ति ।।तद्विज्ञाय ।।पुनरेववरुणंपितरमुपससार ।।अधीहिभगवोब्रह्मेति
।।तंहोवाच ।।तपसाब्रह्मविजिज्ञासस्व ।।तपोब्रह्मेति ।।सतपोतप्यत ।।
सतपस्तप्त्वा ।।५।।आनंदोब्रह्मेतिव्यजानात् ।।आनंदाध्येवखल्विमानि
भूतानिजायंते ।।आनंदेनजातानिजीवंति ।।आनंदंप्रयंत्यभिसंविशं
तीति ।।सैषाभार्गवीवारुणीविद्या ।।परमेव्योमन्प्रतिष्ठिता ।।यएवंवे
दप्रतितिष्ठति ।।अन्नवानन्नादोभवति ।।महान्भवतिप्रजयापशुभिर्ब्रह्म
वर्चसेन ।।महान्कीर्त्या ।।६।।अन्नंननिंद्यात् ।।तद्व्रतं ।।प्राणोवाअन्नं ।।
शरीरमन्नादं ।।प्राणेशरीरंप्रतिष्ठितं ।।शरीरेप्राणःप्रतिष्ठितः ।।तदेत

राम ६ ।।१९५।

दन्नमन्नेप्रतिष्ठितं ।। सयएतदन्नमन्नेप्रतिष्ठितंवेद्प्रतितिष्ठति ।। अन्नवा
नन्नादोभवति ।। महान्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेन ।। महान्कीर्त्या
।।७।। अन्नंनपरिचक्षीत ।। तद्व्रतं ।। आपोवाअन्नं ।। ज्योतिरन्नादं ।। अप्सु
ज्योतिःप्रतिष्ठितं ।। ज्योतिष्यापःप्रतिष्ठिताः ।। तदेतदन्नमन्नेप्रतिष्ठितं ।।
सयएतदन्नमन्नेप्रतिष्ठितंवेद्प्रतितिष्ठति ।। अन्नवानन्नादोभवति ।। महा
न्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेन ।। महान्कीर्त्या ।।८।। अन्नंबहुकुर्वीत ।।
तद्व्रतं ।। पृथिवीवाअन्नं ।। आकाशोन्नादः ।। पृथिव्यामाकाशःप्रतिष्ठितः ।।
आकाशेपृथिवीप्रतिष्ठिता ।। तदेतदन्नमन्नेप्रतिष्ठितं ।। सयएतदन्नमन्ने
प्रतिष्ठितंवेद्प्रतितिष्ठति ।। अन्नवानन्नादोभवति ।। महान्भवतिप्रजया
पशुभिर्ब्रह्मवर्चसेन ।। महान्कीर्त्या ।।९।। नकंचनवसतौप्रत्याचक्षीत ।।

अर ॥११६॥

तद्भूतं।।तस्माद्ययाकयाचविधयाबह्वन्नंप्राप्नुयात्।।अराध्यस्माअन्न मित्याचक्षते।।एतद्वैमुखतोन्नꣳराद्धं।।मुखतोस्माअन्नꣳराध्यते।।ए तद्वैमध्यतोन्नꣳराद्धं।।मध्यतोस्माअन्नꣳराध्यते।।एतद्वाअंततोन्नꣳ राद्धं।।अंततोस्माअन्नꣳराध्यते।।यएवंवेद।।क्षेमइतिवाचि।।योगक्षेम इतिप्राणापानयोः।।कर्मेतिहस्तयोः।।गतिरितिपादयोः।।विमुक्तिरिति पायौ।।इतिमानुषीःसमाज्ञाः।।अथदैवीः।।तृप्तिरितिवृष्टौ।।बलमिति विद्युति।।यशइतिपशुषु।।ज्योतिरितिनक्षत्रेषु।।प्रजातिरमृतमानंद इत्युपस्थे।।सर्वमित्याकाशे।।तत्प्रतिष्ठेत्युपासीत।।प्रतिष्ठावान्भवति।। तन्महइत्युपासीत।।महान्भवति।।तन्मनइत्युपासीत।।मानवान्भवति।।

राम ॥११६॥

३

तन्नम इत्युपासीत ॥ नम्यंतेस्मै कामाः ॥ तद्ब्रह्मेत्युपासीत ॥ ब्रह्मवान्भवति ॥
तद्ब्रह्मणः परिमर इत्युपासीत ॥ पर्येणं म्रियंते द्विषंतः सपत्नाः ॥ परियेप्रि
याभ्रातृव्याः ॥ सयश्चायंपुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ सय एवंवित् ॥
अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मानमुपसंक्रम्य ॥ एतं प्राणमय
मात्मानमुपसंक्रम्य ॥ एतं मनोमयमात्मानमुपसंक्रम्य ॥ एतं विज्ञा
नमयमात्मानमुपसंक्रम्य ॥ एतमानंदमयमात्मानमुपसंक्रम्य ॥
इमान्लोकान्कामान्नी कामरूप्यनुसंचरन् ॥ एतत्साम गायन्नास्ते ॥ हा३
वु हा३ वु हा३ वु ॥ अहमन्नमहमन्नमहमन्नं ॥ अहमन्नादो३ऽहमन्नादो३
हमन्नादः ॥ अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् ॥ अहमस्मि

अर
८
॥११७॥
न

प्रथमजा ऋता३स्य॥ पूर्वं देवेभ्यो अमृतस्य ना३भायि॥ यो मा ददाति स इदे
वमा३वाः॥ अहमन्नमन्नमदन्तमा३द्मि॥ अहं विश्वं भुवनमभ्यभवां॥
सुवर्ज्योतीः॥ य एवं वेद॥ इत्युपनिषत्॥१०॥ ९॥ भृगुस्तस्मै यतो विशन्ति
तद्विजिज्ञासस्व तत्त्रयो दश अन्नं प्राणमनो विज्ञानमिति विज्ञाय तं तपस्वाद्वा
दशद्वादशानन्द इति सेषा दशान्नं न निंद्यात् प्राणो शरीरमन्नं न परिचक्षीता
पोज्योतिरन्नं बहु कुर्वीत पृथिव्यामाकाश एकादशैकादशनकंचन नैकेषष्टि
दश॥ ॐ॥ सह नाववतु॥ सह नौ भुनक्तु॥ सह वीर्यं करवावहै॥ तेजस्विना
वधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥ ॐ॥ हरिः ओं॥॥
सह नाववतु॥ सह नौ भुनक्तु॥ सह वीर्यं करवावहै॥ तेजस्विनावधीतमस्तु

राम
८
॥११७

माविद्विषावहै ॥ ॐ शांतिः शांतिः शांतिः ॥ ॐ ॥ अंभस्यपारे भुवनस्य मध्ये ना
कस्य पृष्ठे महतो महीयान् ॥ शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापतिश्चरति ग
र्भे अंतः ॥ यस्मिन्निदꣳ सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः ॥ तदे
व भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् ॥ येनावृतं खं च दिवं महीं च येना
दित्यस्तपति तेजसा भ्राजसा च ॥ यमंतः समुद्रे कवयो वयंति यदक्षरे परमे
प्रजाः ॥ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यचसर्ज भूम्यां ॥ यदोषधीभिः
पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि ॥ अतः परं नान्यदणीयसꣳ हि परा
त्परं यन्महतो महांतं ॥ यदेकमव्यक्तमनंतरूपं विश्वं पुराणं तमसः परस्तात्
॥१॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां ॥ इष्टापूर्तं बहुधा जातं जा २
यमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चंद्रमाः ॥

वे

अर ॥११८॥

तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषाद
धि ॥ कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥ अर्धमासा मासा ऋतवः संवत्सरश्च मासा
कल्पंतां ॥ स आपः प्रदुघे उभे इमे अंतरिक्षमथो सुवः ॥ नैनमूर्ध्वं न तिर्यंचं न
मध्ये परिजग्रभत् ॥ न तस्येशे कश्चन तस्य नाम महद्यशः ॥ २ ॥ न संदृशे तिष्ठ
ति रूपमस्य न चक्षुषा पश्यति कश्चनैनं ॥ हृदा मनीषा मनसाभिक्लृप्तो य एनं
विदुरमृतास्ते भवंति ॥ अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ॥ एष हि देवः प्रदिशो
नु सर्वाः पूर्वो हि जातः स उ गर्भे अंतः ॥ स विजायमानः स जनिष्यमाणः प्रत्यङ्मु
खास्तिष्ठति विश्वतोमुखः ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उ राम्
त विश्वतस्पात् ॥ सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ ॥११९

नि

वेनस्तत्पश्यन्विश्वाभुवनानिविद्वान्यत्रविश्वंभवत्येकनीळं।।यस्मिन्नि
दꣳसंचविचैकꣳसओतःप्रोतश्चविभुःप्रजासु।।प्रतद्वोचेअमृतंनुवि
द्वान्गंधर्वोनामनिहितंगुहासु।।३।।त्रीणिपदानिनिहितागुहासुयस्तद्वेद
सवितुःपितासत्।।सनोबंधुर्जनितासविधाताधामानिवेदभुवनानि
विश्वा।।यत्रदेवाअमृतमानशानास्तृतीयेधामान्यैरयंत।।परिद्यावा
पृथिवीयंतिसद्यःपरिलोकान्परिदिशःपरिसुवः।।ऋतस्यतंतुंविततं
विचृत्यतदपश्यत्तदभवत्प्रजासु।।परीत्यलोकान्परीत्यभूतानिपरीत्य
सर्वाःप्रदिशोदिशश्च।।प्रजापतिःप्रथमजाऋतस्यात्मनात्मानमभिसंब
भूव।।सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं।।सनिंमेधामयासिषं।।उ
द्दीप्यस्वजातवेदोपघ्नन्निर्ऋतिंमम।।४।।पशूꣳश्चमह्यमावहजीवनंचदि

भ्ये

अर
॥१११॥

यौदिश॥ मानोहिंसीर्जातवेदोगामश्वंपुरुषंजगत्॥ अबिभ्रदग्नआगहि श्रिया मापरिपातय॥ पुरुषस्य विद्मसहस्राक्षस्य महादेवस्य धीमहि॥ तन्नो रुद्रः प्रचोदयात्॥ तत्पुरुषाय विद्महे महादेवाय धीमहि॥ तन्नो रुद्रः प्रचोदयात्॥ तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि॥ तन्नो दंतिः प्रचोदयात्॥ तत्पुरुषाय विद्महे चक्रतुंडाय धीमहि॥ ५॥ तन्नो नंदिः प्रचोदयात्॥ तत्पुरुषाय विद्महे महासेनाय धीमहि॥ तन्नः षण्मुखः प्रचोदयात्॥ तत्पुरुषाय विद्महे स्वर्णपक्षाय धीमहि॥ तन्नो गरुडः प्रचोदयात्॥ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि॥ तन्नो ब्रह्म प्रचोदयात्॥ नारायणाय विद्महे वासुदेवाय धीमहि॥ तन्नो विष्णुः प्रचोदयात्॥ वज्रनखाय विद्महे तीक्ष्ण

सांब
११२

दृंष्ट्राय धीमहि ॥ तन्नो नारसिंहः प्रचोदयात् ॥ भास्कराय विद्महे मह
द्युतिकराय धीमहि ॥ तन्नो आदित्यः प्रचोदयात् ॥ वैश्वानराय विद्महे लीलो
लाय धीमहि ॥ तन्नो अग्निः प्रचोदयात् ॥ कात्यायनाय विद्महे कन्यकुमारि
धीमहि ॥ तन्नो दुर्गिः प्रचोदयात् ॥ सहस्रपरमा देवी शतमूला शतांकुरा ॥
सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥ कांडात्कांडात्प्ररोहंती परुषः परुषः प
रि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रे
ण विरोहसि ॥ तस्यास्ते देवीष्टके विधेम हविषा वयं ॥ अश्वक्रांते रथक्रांते वि
ष्णुक्रांते वसुंधरा ॥ शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥ भूमिर्धेनुर्धर
णी लोकधारिणी ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके ह

अर
११
॥१२०॥

नमे पापं यन्मया दुष्कृतं कृतं ॥ मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमंत्रिता ॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितं ॥८॥ मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ॥ तया हतेन पापेन गच्छामि परमां गतिं ॥ यत इंद्र भयामहे ततो नो अभयं कृधि ॥ मघवंछग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ॥ वृषेंद्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥ स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ आपो नमन्यु स्तृपर्लभभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ॥ सोमो विश्वान्यतसा वनानि नार्वागिंद्रं प्रतिमानानि देभुः ॥९॥ ब्रह्म

राम
११
॥१२०॥

जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ॥ स बुध्निया उपमा अस्य विष्ठाः स
तश्च योनिमसतश्च विवः ॥ स्योना पृथिवि भवा नृक्षरा निवेशनी ॥ यच्छा नः शर्म सु
प्रथः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्व
ये श्रियम् ॥ श्रीर्मे भजतु ॥ अलक्ष्मीर्मे नश्यतु ॥ विष्णुमुखा वै देवाश्छन्दोभिरिमा
ल्लोकाननपजय्यमभ्यजयन् ॥ महाँ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु ॥ १० ॥
स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥ सोमानं स्वरणं कृणुहि ब्र
ह्मणस्पते ॥ कक्षीवन्तं य औशिजः ॥ शरीरं यज्ञशमलं कुसीदं तस्मिन्सीदतु योऽस्मा
न्द्वेष्टि ॥ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ॥ तेन पवित्रेण शुद्धे ने
पूता अति पाप्मानमरातिं तरेम ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रह
ञ्छूर विद्वान् ॥ जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ सुमित्रा

अ२०

१२१॥

नआपऔषधयःसंतुदुर्मित्रास्तस्मैभूयासुर्योस्मान्द्वेष्टियंचवयंद्विष्मः॥आपोहिष्ठा
मयोभुवस्तानऊर्जेदधातन॥३३॥महेरणायचक्षसे॥योवःशिवतमोरसस्त
स्यभाजयतेहनः॥उशतीरिवमातरः॥तस्माअरंगमामवोयस्यक्षयायजिन्व
थ॥आपोजनयथाचनः॥हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः॥य
न्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः॥यन्मेमनसावाचाकर्मणावादुष्कृ
तंकृतं॥तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः॥नमोग्नयेप्सु
मतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोद्भ्यः॥१२॥यदपांक्रूरंयदमे
ध्यंयदशांतंतदपगच्छतात्॥अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात्॥
तन्नोवरुणोराजापाणिनाह्यवमर्शतु॥सोहमपापोविरजोनिर्मुक्तोमुक्तकि
ल्बिषः॥नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां॥यश्चाप्सुवरुणःसपुना
त्वघमर्षणः॥इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या॥

राम

१२१

अस्मिन्क्रियामरुद्वृधेवितस्तयार्जीकीयेश्रृणुह्यासुषोमया॥ऋतंचसत्यंचा
भीद्धात्तपसोध्यजायत॥ततोरात्रिरजायततततःसमुद्रोअर्णवः॥१३॥स
मुद्रादर्णवादधिसंवत्सरोअजायत॥अहोरात्राणिविदधद्विश्वस्यमि
षतोवशी॥सूर्याचंद्रमसौधातायथापूर्वमकल्पयत्॥दिवंचपृथिवींचां
तरिक्षमथोस्वः॥यत्पृथिव्यांरजस्वमांतरिक्षेविरोदसी॥इमांस्तदापो
वरुणःपुनात्वघमर्षणः॥पुनंतुवसवःपुनातुवरुणःपुनात्वघमर्षणः॥एष
भूतस्यमध्येभुवनस्यगोप्ता॥एषपुण्यकृतांलोकानेषमृत्योर्हिरण्मयं॥
द्यावापृथिव्योर्हिरण्मयंसंश्रितंसुवः॥१४॥सनःसुवःसंशिशा
धि॥आर्द्रंज्वलतिज्योतिरहमस्मि॥ज्योतिर्ज्वलतिब्रह्माहमस्मि॥योह
मस्मिब्रह्माहमस्मि॥अहमस्मिब्रह्माहमस्मि॥अहमेवाहंमांजुहोमि

अ२०
१२२।।

स्वाहा ।। अकार्यकार्यवकीर्णः स्तेनो भ्रूणहा गुरुतल्पगः ।। वरुणेनापामघ
मर्षणस्तस्मात्पापात्प्रमुच्यते ।। रजोभूमिस्त्वमां रोदयस्व प्रवदंति धीराः
।। आक्रांत्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य राजा ।। वृषा पवि
त्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इंदुः ।।१५।। परस्ताद्यशो
गुहासु मम चक्रतुंडाय धीमहि तीक्ष्णदंष्ट्राय धीमहि परिभूतिष्ठितं दे
भुर्यच्छतु दधातनाश्च अर्णवः सुवो राजे के च ।।१।। जातवेदसे सुनवा
म सोममरातीयतो निदहाति वेदः ।। स नः पर्षदति दुर्गाणि विश्वा नावेव
सिंधुं दुरितात्यग्निः ।। तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीं कर्मफ
लेषु जुष्टां । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ।। अग्ने
त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।। पूश्च पृथ्वी बहुला

राम
१२२।

नेउवछभवा तोकाय तनयाय शंयोः॥ विश्वानि नो दुर्गहा जातवेदः सिंधुं न
नावा दुरिताति पर्षि॥ अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनू=
नां॥ पृतनाजितं सहमानमुग्रमग्निं हुवेम परमात्सधस्थात्॥ स नः पर्ष
दति दुर्गाणि विश्वा क्षामद्देवो अति दुरितात्यग्निः॥ प्रत्नोषि कमीड्यो अध्व
रेषु सनाच्च होता नव्यश्च सत्सि॥ स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभग
मायजस्व॥ गोभिर्जुष्टमयुजो निषिक्तं तवेंद्र विष्णोरनुसंचरेम॥ नाकस्य
पृष्ठमभिसंवसानो वैष्णवीं लोक इह मादयंतां॥१॥ अग्निश्च त्वा रिचा॥२
॥ भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेंतरिक्षाय स्वाहा सुवरन्नमा
दित्याय दिवे स्वाहा भूर्भुवः सुवरन्नं चंद्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः
स्वधा पितृभ्यो भूर्भुवः सुवरन्नमों॥३॥ भूरग्नये पृथिव्यै स्वाहा भुवो वायव

अर०
१२३॥

यें‍तरिक्षायस्वाहासुवरादित्यायदिवेस्वाहाभूर्भुवःसुवश्चंद्रमसेदिग्भ्यस्वा
हानमोदेवेभ्यःस्वधापितृभ्योभूर्भुवःसुवरग्नओं॥४॥भूरग्नयेचपृथि
व्येचमहतेचस्वाहाभुवोवायवेचांतरिक्षायचमहतेचस्वाहासुवरादित्या
यचदिवेचमहतेचस्वाहाभूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च
महतेचस्वाहानमोदेवेभ्यःस्वधापितृभ्योभूर्भुवःसुवर्महरों॥५॥पा
हिनोअग्नएनसेस्वाहा॥पाहिनोविश्ववेदसेस्वाहा॥यज्ञंपाहिविभा
वसोस्वाहा॥सर्वंपाहिशतक्रतोस्वाहा॥६॥पाहिनोअग्नएकया॥पा
ह्युतद्वितीयया॥पाह्यूर्जंतृतीयया॥पाहिगीर्भिश्चतसृभिर्वसोस्वा
हा॥७॥यश्छंदसामृषभोविश्वरूपश्छंदोभ्यश्छंदांस्याविवेश॥स

राम
१४
॥१२३॥

चाꣳशिक्यः पुरोवा चोपनिषदिंद्रो ज्येष्ठ इंद्रियाय ऋषिभ्यो नमो देवेभ्यः
सुच स्वधा पितृभ्यो भूर्भुवःस्वश्छंद ओं ॥८॥ नमो ब्रह्मणे धारणं मे अस्त्वनिरा
करणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओं ॥९॥
ऋतं तपः सत्यं तपः श्रुतं तपः शांतं तपो दमः स्तपः शमस्तपो दानं तपो य
ज्ञं तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्यैतत्तपः ॥१०॥ यथा वृक्षस्य संपुष्पितस्य
दूराद्गंधो वात्येवं पुण्यस्य कर्मणो दूराद्गंधो वाति यथासिधारां कर्तेऽवहितामव
क्रामे यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मा
नं जुगुप्सेत् ॥११॥ अणोरणीयान्महतो महीयानात्मा गुहायां निहितो
स्य जंतोः ।। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं ।।
सप्त प्राणाः प्रभवंति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः ।। सप्त इमे लोका

गुहा

अर० ३५ ॥१२४॥

येषुचरंतिप्राणाशयानिहिताःसप्तसप्त॥अतःसमुद्रागिरयश्चसर्वेस्मात्स्यंदंति
सिंधवःसर्वरूपाः॥अश्चतेविश्वाओषधयोरसाश्चयेनैषभूतस्तिष्ठत्यंतरा
त्मा॥ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां॥श्येनोगृ
ध्राणाꣳस्वधितिर्वनानाꣳसोमःपवित्रमत्येतिरेभन्॥अजामेकांलोहित
शुक्लकृष्णांबह्वीप्रजांजनयंतीꣳसरूपां॥अजोह्येकोजुषमाणोनुशेतेज
हात्येनांभुक्तभोगामजोन्यः॥३॥हꣳसःशुचिषद्वसुरंतरिक्षसद्धोता
वेदिषदतिथिर्दुरोणसत्॥नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजा
अद्रिजाऋतंबृहत्॥घृतंमिमिक्षिरेघृतमस्ययोनिर्घृतेश्रितोघृतमुव
स्यधाम॥अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं॥समु

राम ३५ ॥१२४॥

द्राद्रूर्मिर्मधुमाꣳउदारदुपाꣳशुनासममृतत्वमानट् ।। घृतस्यनामगुह्यं
यदस्तिजिह्वादेवानाममृतस्यनाभिः ।। वयंनामप्रब्रवामाघृतेनास्मिन्य
ज्ञेधारयामानमोभिः ।। उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमी
द्गौरएतत् ।। चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ।।
त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याꣳआविवेश ।। २० ।। त्रिँहितं   धा ५
पणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् ।। इंद्रएकꣳसूर्यएकंजजा
गा   नवेदेकꣳस्वधयानिष्टतक्षुः ।। योदेवानांप्रथमंपुरस्ताद्विश्वाधियोरुद्रो
महर्षिः ।। हिरण्यगर्भंपश्यतजायमानꣳसनोदेवःशुभयास्मृत्यासंयु
नक्तु ।। यस्मात्परंनापरमस्तिकिंचिद्यस्मान्नाणीयोनज्यायोस्तिकश्चित् ।।

अर०
९६
॥१२५॥

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः॥ परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशंति॥ वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः॥ ते ब्रह्मलोके तु परांतकाले परामृतात्परिमुच्यंति सर्वे॥ दहं विपापं परमेश्मभूतं यत्पुंडरीकं पुरमध्यसंस्थं॥ तत्रापि दहं गगनं विशोकस्तस्मिन्यदंतस्तदुपासितव्यं॥ यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥३॥ अजो न्यु आविवेश सर्वं चत्वारि॥३२॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं॥ विश्वं नारायणं देवमक्षरं परमं पदं॥ विश्वतः परमं नित्यं विश्वं नारायणं हरिं॥

च

राम
९६
॥१२५॥

विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति।।पतिंविश्वस्यात्मेश्वरंशाश्वतंशि
वमच्युतं।।नारायणंमहाज्ञेयंविश्वात्मानंपरायणं।।नारायणपरोज्योतिरा
त्मानारायणःपरः।।नारायणंपरंब्रह्मतत्वंनारायणःपरः।।नारायणपरो
ध्याताध्यानंनारायणःपरः।।यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा।।१।।
अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः।।अनंतमव्ययंकविंसमुद्रेंतं
विश्वशंभुवं।।पद्मकोशप्रतीकाशंहृदयंचाप्यधोमुखं।।अधोनिष्ट्यावि
तस्त्यांतेनाभ्यामुपरितिष्ठति।।ज्वालमालाकुलंभातीविश्वस्यायतनंमह
त्।।संततंशिलाभिस्तुलंबत्याकोशसंनिभं।।तस्यांतेसुषिरंसूक्ष्मंत
स्मिन्सर्वंप्रतिष्ठितं।।तस्यमध्येमहानग्निर्विश्वार्चिर्विश्वतोमुखः।।सोग्र
भुग्विभजंतिष्ठन्नाहारमजरःकविः।।तिर्यगूर्ध्वमधःशायीरश्मयस्तस्य

अ०२०
१७
॥१२६॥

संतता॥संतापयतिस्वंदेहमापादतलमस्तकः॥तस्यमध्येवन्हिशिखाअ
णीयोर्ध्वाव्यवस्थितः॥नीलतोयदमध्यस्थाविद्युल्लेखेवभास्वरा॥
नीवारशूकवत्तन्वीपीताभास्वत्यणूपमा॥तस्याःशिखायामध्येपरमा
त्माव्यवस्थितः॥सब्रह्मासशिवःसहरिःसेंद्रःसोक्षरःपरमःस्वराट्॥२॥
अग्निवासंतताषट्च॥१३॥आदित्योवाएषएतन्मंडलंतपतितत्रता
ऋचस्तदृचामंडलंसऋचांलोकोथयएषएतस्मिन्मंडलेर्चिर्दीप्य
तेतानिसामानिससाम्नांलोकोथयएषएतस्मिन्मंडलेर्चिषिपुरुषस्ता
नियजूंषिसयजुषामंडलंसयजुषांलोकःसैषात्रय्येवविद्यातपतियए
षोंतरादित्येहिरण्मयःपुरुषः॥१४॥आदित्योवैतेजओजोबलंयशश्च

राम
१२६।
१७

चक्षुः श्रोत्रं मात्मा मनो मृत्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोक
पालः कः किं कं तत्सत्यमन्नममृतो जीवो विश्वः कतमः स्वयंभु ब्रह्मैतदमृ
त एष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्यं सलोकतामाप्नोत्ये
तासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति य एवं
वेदेत्युपनिषत् ॥ १५ ॥ निधनपतये नमः ॥ निधनपतांतिकाय नमः ॥
ऊर्ध्वाय नमः ॥ ऊर्ध्वलिंगाय नमः ॥ हिरण्याय नमः ॥ हिरण्यलिंगाय न
मः ॥ सुवर्णाय नमः ॥ सुवर्णलिंगाय नमः ॥ दिव्याय नमः ॥ दिव्यलिंगा
य नमः ॥ भवाय नमः ॥ भवलिंगाय नमः ॥ शर्वाय नमः ॥ शर्वलिंगाय
नमः ॥ शिवाय नमः ॥ शिवलिंगाय नमः ॥ ज्वलाय नमः ॥ ज्वललिंगाय न

मः॥आत्मायनमः॥आत्मलिंगायनमः॥परमायनमः॥परमलिंगायन
मः॥एतत्सोमस्य सूर्यस्य सर्वलिंगं स्थापयति पाणिमंत्रं पवित्रं॥१६॥
सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥भवे भवे नातिभवे भवस्व मां॥
भवोद्भवाय नमः॥१७॥वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय न
मः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बल
प्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥१८॥अघोरेभ्यो
थघोरेभ्यो घोरघोरतरेभ्यः॥सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥
॥१९॥तत्पुरुषाय विद्महे महादेवाय धीमहि॥तन्नो रुद्रः प्रचोदयात्॥२०॥ राम
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा ॥१२७

महा

शिवोमेअस्तुसदाशिवों ॥२१॥ नमोहिरण्यबाहवेहिरण्यवर्णायहिरण्यरू
पायहिरण्यपतयेंबिकापतयउमापतयेपशुपतयेनमोनमः ॥२२॥ ऋतं
सत्यंपरंब्रह्मपुरुषंकृष्णपिंगलं ॥ ऊर्ध्वरेतंविरूपाक्षंविश्वरूपायवैनमोन
मः ॥२३॥ सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ पुरुषोवैरुद्रःसन्महोनमो
नमः ॥ विश्वंभूतंभुवनंचित्रंबहुधाजातंजायमानंचयत् ॥ सर्वोह्येषरुद्र
स्तस्मैरुद्रायनमोअस्तु ॥२४॥ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे ॥
वोचेमशंतमंहृदे ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु ॥२५॥ यस्यवै
कंकत्यग्निहोत्रहवणीभवतिप्रत्येवास्याहुतयस्तिष्ठंत्यथोप्रतिष्ठित्यै ॥
॥२६॥ कृणुष्वपाजइतिपंच ॥२७॥ अदितिर्देवागंधर्वामनुष्याःपितरोसु

अर
१९
॥१२८॥

रास्तेषां सर्वभूतानां माता मेदिनी महतां मही सावित्री गायत्री जगत्यु
र्वी पृथ्वी बहुला विश्वा भूता कतमा का या सा सत्येत्यमृतेति वसिष्ठः
॥२८॥ आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आ
पोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दांस्यापो
ज्योतींष्यापो यजूंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सु
वराप ओं ॥२९॥ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु मां ॥ पुनन्तु ब्र
ह्मणस्पतिर्ब्रह्म पूता पुनातु मां ॥ यदुच्छिष्टमभोज्यं यद्वा दुश्चरि
तं मम ॥ सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥३०॥ अग्निश्च
मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ॥ पापेभ्यो रक्षन्तां ॥ यदह्ना पा

राम
१९
॥१२८॥

पमकार्षं॥मनसावाचाहस्ताभ्यां॥पद्भ्यामुदरेण शिश्ना॥अहस्तदवलुं
पतु॥यत्किंचदुरितं मयि॥इदमहं माममृतयोनौ॥सत्येज्योतिजु
होमिस्वाहा॥३१॥सूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः॥
पापेभ्योरक्षंतां॥यद्रात्रियापापमकार्षं॥मनसावाचाहस्ताभ्यां॥
पद्भ्यामुदरेण शिश्ना॥रात्रिस्तदवलुंपतु॥यत्किंचदुरितंमयि॥इ
दमहंमाममृतयोनौ॥सूर्येज्योतिषिजुहोमिस्वाहा॥३२॥ओं
मित्येकाक्षरंब्रह्म॥अग्निर्देवताब्रह्मइत्यार्षं॥गायत्रंछंदंपर
मात्मंसरूपं॥सायुज्यंविनियोगं॥३३॥आयातुवरदादेवीअक्ष
रंब्रह्मसंमितं॥गायत्रीछंदसांमातेदंब्रह्मजुषस्वमे॥यदन्होत्कु

अ र॰
३२९॥

रुते पापंतदन्हात्सतिमुच्यते ॥ यद्रात्रियाकुरुते पापंतद्रात्रियात्सतिमु
च्यते ॥ सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ॥ २४ ॥ ओजोसि सहो
सि बलमसि भ्राजोसि देवानांधामनामासि विश्वमसि विश्वायुः सर्वम
सि सर्वायुरभिभूरोंगायत्रीमावाहयामि सावित्रीमावाहयामि सरस्व
तीमावाहयामि छंदर्षीनावाहयामि श्रियमावाहयामि गायत्र्यागा
यत्रीच्छंदो विश्वामित्रऋषिः सविता देवताग्निर्मुखंब्रह्माशिरोविष्णु
र्हृदयंरुद्रः शिखापृथिवीयोनिः प्राणापानव्यानोदानसमानासप्राण
श्वेतवर्णासांख्यायनसगोत्रागायत्री चतुर्विंशत्यक्षरात्रिपदाषट्कु राम
क्षिः पंचशीर्षोपनयने विनियोगः ओंभूः ओं भुवः ॥ ओं सुवः ॥ ओं महः ॥ ॥ २९॥

ॐ जनः ॥ ॐ तपः ॥ ओं सत्यं ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥
धियो यो नः प्रचोदयात् ॥ ओमापो ज्योती रसोमृतं ब्रह्म भूर्भुवः सुवरों ॥
॥ ३५ ॥ उत्तमे शिखरे जाते भूम्यां पर्वत मूर्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञाता ग
च्छ देवि यथासुखं ॥ स्तुतो मया वरदा वेदमाता प्रचोदयंती पवने द्विजाता ॥ आ
युः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकं ॥ ३६ ॥ घृणिः
सूर्य आदित्यो न प्रभा वात्यक्षरं ॥ मधु क्षरंति तद्रसं ॥ सत्यं वै तद्रसमापो ज्यो
ती रसोमृतं ब्रह्म भूर्भुवः सुवरों ॥ ३७ ॥ ब्रह्ममेतु मां ॥ मधुमेतु मां ॥ ब्रह्ममे
व मधुमेतु मां ॥ यास्ते सोम प्रजा वत्सोभि सो अहं ॥ दुःष्वप्नहं दुरुष्षह ॥ या
स्ते सोम प्राणां स्तां जुहोमि ॥ त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् ॥

अर॰ २१ ॥१३०॥

ब्रह्महत्यां वा एते घ्नंति ॥ ये ब्राह्मणास्त्रिसुपर्णं पठंति ॥ ते सोमं प्राप्नुवंति ॥
आसहस्रात्पंक्तिं पुनंति ॥ ॐ ॥ ३८ ॥ ब्रह्ममेधया ॥ मधुमेधया ॥ ब्रह्ममे
व मधुमेधया ॥ अद्या नो देव सवितः प्रजावत्सावीः सौभगं ॥ परा दुःष्वप्नियं
सुव ॥ विश्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रं तन्न आसुव ॥ मधुवा
ता ऋतायते मधु क्षरंति सिंधवः ॥ माध्वीर्नः संत्वोषधीः ॥ मधु नक्तमुतोष
सि मधुमत्पार्थिवं रजः ॥ मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधु
मांऽअस्तु सूर्यः ॥ माध्वीर्गावो भवंतु नः ॥ य इमं त्रिसुपर्णमयाचितं ब्राह्म
णाय दद्यात् ॥ भ्रूणहत्यां वा एते घ्नंति ॥ ये ब्राह्मणास्त्रिसुपर्णं पठंति ॥ ते सो
मं प्राप्नुवंति ॥ आसहस्रात्पंक्तिं पुनंति ॥ ॐ ॥ ३९ ॥ ब्रह्ममेधवा ॥ मधुमे

राम ॥१३०॥

धवो॥ब्रह्ममेवमधुमेधवो॥ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांम
हिषोमृगाणां॥श्येनोगृध्राणांःस्वधितिर्वनानांःसोमःपवित्रमत्येतिरेभ
न्॥हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत्॥नृषद्व
रसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत्॥ऋचेत्वारुचेत्वा
समित्स्रवंतिसरितोनधेनाः॥अंतर्हृदामनसापूयमानाः॥घृतस्यधाराअ
भिचाकशीमि॥हिरण्ययोवेतसोमध्यआसां॥तस्मिन्त्सुपर्णोमधुकृत्कुला
यीभजन्नास्तेमधुदेवताभ्यः॥तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृत
स्यधारां॥यइदंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात्॥वीरहत्यांवाएतेघ्नंति॥
येब्राह्मणास्त्रिसुपर्णंपठंति॥तेसोमंप्राप्नुवंति॥आसहस्रात्पंक्तिंपुनंति॥
ॐ॥

श्री

अ२० २२ ॥१३१॥

मेधादेवी जुषमाणा नु गाँओ द्विश्वाची भद्रा सुमनस्यमाना॥ त्वया जुष्टा नुदमाना दुरुक्तान्बृहद्वदेम विदथे सुवीराः॥ त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मागतश्रीरुत त्वया॥ त्वया जुष्टश्चित्रं विंदते वसु सा नो जुषस्व द्रविणो न मेधे॥४१॥ मेधां म इंद्रो ददातु मेधां देवी सरस्वती॥ मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा॥ अप्सरासु च या मेधा गंधर्वेषु च यन्मनः॥ दैवी मेधा सरस्वती सा मां मेधा सुरभिर्जुषतां स्वाहा॥४२॥ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या॥ ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषंतां॥४३॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयींद्र इंद्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु॥४४॥ अपैतु मृत्युरमृ

राम ॥१३१॥

तंनुआगन्विवस्वतोनोअभयंकृणोतु॥ पूर्णंवनस्पतेरिवाभिनःशीयतांर
यिःसचतांनःशचीपतिः॥४५॥ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेव
यानात्॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान्॥४६॥
वातंप्राणंमनसान्वारभामहेप्रजापतिंयोभुवनस्यगोपाः॥ सनोमृत्योस्त्रा
यतांपात्वंहसोज्योग्जीवाजरामशीमहि॥४७॥ अमुत्रभूयादधयद्यमस्य
बृहस्पतेअभिशस्तेरमुंचः॥ प्रत्यौहतामश्विनामृत्युमस्माद्देवानामग्नेभिष
जाशचीभिः॥४८॥ हरिंहरंतमनुयंतिदेवाविश्वस्येशानंवृषभंमतीनां॥ ब्र
ह्मसरूपमनुदेदमागादयनंमाविवधीर्विक्रमस्व॥४९॥ शल्कैरग्निमिंधान
उभौलोकौसनेमहं॥ उभयोर्लोकयोर्ऋध्वातिमृत्युंतराम्यहं॥५०॥ माछिदोमृ



मेद

अर०

॥१३१॥ २३ स्योमा वधीर्मामुबलुं विरहो मा प्र मोषीः॥ प्रजां मा मे रीरिषु आयुरुग्रन्नृचक्षः संत्वा हवि
षा विधेम ॥५१॥ मा नो महांतमुत मा नो अर्भकं मा न उक्षंतमुत मा न उक्षितं॥ मा
नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः॥५२॥ मा नस्तोके तनये
मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः॥ वीरान्मा नो रुद्र भामितो वधीर्हवि
ष्मंतो नमसा विधेम ते ॥५३॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव॥
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां ॥५४॥ स्वस्तिदा विशस्प
तिर्वृत्रहा विमृधो वशी॥ वृषेंद्रः पुर एतु नः स्वस्तिदा अभयंकरः॥५५॥ त्र्यंबकं यजा
महे सुगंधिं पुष्टिवर्धनं॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्॥५६॥ ये ते
सहस्रमयुतं पाशा मृत्यो मर्त्याय हंतवे॥ तान्यज्ञस्य मायया सर्वानवयजामहे॥५७॥ ॥१३२॥

मु

९

राम

२३

16

कृतं

मृत्यवे स्वाहा मृत्यवे स्वाहा ॥ ५८ ॥ देवकृतस्यैनसोऽवयजनमसि स्वाहा ॥ मनुष्यकृतस्यैन

सोऽवयजनमसि स्वाहा ॥ पितृकृतस्यैनसोऽवयजनमसि स्वाहा ॥ आत्मकृतस्यैनसो

ऽवयजनमसि स्वाहा ॥ अन्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अस्मत्कृतस्यैनसोऽव

यजनमसि स्वाहा ॥ यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ यत्स्वपन्त

श्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ यत्सुषुप्तश्च जाग्रतश्चैनश्चकृ

म तस्यावयजनमसि स्वाहा ॥ यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयज

नमसि स्वाहा ॥ एनस एनसोऽवयजनमसि स्वाहा ॥ ५९ ॥ यद्वो देवाश्चकृम जिह्वया गु

रु मनसो वा प्रयुती देवहेळनं ॥ अरावा यो नो अभिदुच्छुनायते तस्मिन्तदेनो वस

वो निधेतन स्वाहा ॥ ६० ॥ कामोऽकार्षीन्नमो नमः ॥ कामोऽकार्षीत्कामः करोति नाहं

अ॰ ६॰
॥ १३३॥

करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥६१॥ मन्युरकार्षीन्नमो नमः॥ मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा ॥६२॥ तिलाञ्जुहोमि सरसांऽसपिष्टान्गंधार मम चित्ते रमंतु स्वाहा ॥६३॥ गावो हिरण्यं धनमन्नपानंऽसर्वेषाऽश्रियै स्वाहा ॥६४॥ श्रियं च लक्ष्मिं च पुष्टिं च कीर्तिं चानृण्यतां॥ ब्रह्मण्यं बहुपुत्रतां॥ श्रद्धामेधे प्रजाः संददातु स्वाहा ॥६५॥ तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वशानुगाः॥ तिलाः पुनंतु मे पापं यत्किंचिद्दुरितं मयि स्वाहा ॥६६॥ चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः॥ गोस्तेयंऽसुरापानं भ्रूणहत्या तिलाशांतिंऽशमयंतु स्वाहा ॥६७॥ श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चानृण्यतां॥ ब्रह्मण्यं बहुपुत्रतां॥ श्रद्धामेधे प्रज्ञा तु जातवेदः संददातु स्वाहा ॥६८॥ प्राणापानव्यानोदानसमाना मे शुध्यंतां

राम
॥१३४॥

ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुध्याकू
तिःसंकल्पा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ त्वक्चर्ममांꣳस
रुधिरमेदोमज्जास्नायवोस्थीनि मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ
स्वाहा ॥ शिरःपाणिपादपार्श्वपृष्ठोरूदरजंघशिश्नोपस्थपायवो मे शुध्यंतां ज्योति
रहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ उत्तिष्ठ पुरुष हरित पिंगल लोहिताक्षि देहि दे
हि ददापयिता मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भू[illegible] यासꣳ स्वाहा [illegible] पृथि
व्यापस्तेजो वायुराकाशा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ शब्द
स्पर्शरूपरसगंधा मे शुध्यंतां ज्योतिरहं विरजा विरजा विपाप्मा भूयासꣳ स्वाहा ॥ मनो
वाक्कायकर्माणि मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ अव्यक्तभावै
रहंकारैर्ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ आत्मा मे शुध्यंतां ज्योतिरहं विरजा

अ र०
२५
॥१३४॥

विपाप्मा भूयासꣳ स्वाहा॥ अंतरात्मा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥ परमात्मा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥ क्षुधे स्वाहा॥ क्षुत्पिपासाय स्वाहा॥ विविट्यै स्वाहा॥ ऋग्विधानाय स्वाहा॥ कषोत्काय स्वाहा॥ क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहं॥ अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मानꣳ स्वाहा॥ अन्नमयप्राणमयमनोमयविज्ञानमयमानंदमयमात्मा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥ ७०॥ अग्नये स्वाहा॥ विश्वेभ्यो देवेभ्यः स्वाहा॥ ध्रुवाय भूमाय स्वाहा॥ ध्रुवक्षितये स्वाहा॥ अच्युतक्षितये स्वाहा॥ अग्नये स्विष्टकृते स्वाहा॥ धर्माय स्वाहा॥ अधर्माय स्वाहा॥ अद्भ्यः स्वाहा॥ ओषधिवनस्पतिभ्यः स्वाहा॥ ७१॥ रक्षोदेवजनेभ्यः स्वाहा॥ अवसानेभ्यः स्वाहा॥ अवसानपतिभ्यः स्वाहा॥ सर्वभूतेभ्यः स्वाहा॥ कामाय स्वाहा॥

रामू
॥१३४॥

॥ गृह्याभ्यः स्वाहा

अंतरिक्षायस्वाहा ॥ यद्देजतिजगतियच्चचेष्टतिनाम्नोभागोयन्नाम्नेस्वाहा ॥ पृथि
व्यैस्वाहा ॥ अंतरिक्षायस्वाहा ॥ २ ॥ दिवेस्वाहा ॥ सूर्यायस्वाहा ॥ चंद्रमसेस्वाहा ॥
नक्षत्रेभ्यःस्वाहा ॥ इंद्रायस्वाहा ॥ बृहस्पतयेस्वाहा ॥ प्रजापतयेस्वाहा ॥ ब्रह्मणे
स्वाहा ॥ स्वधापितृभ्यःस्वाहा ॥ नमोरुद्रायपशुपतयेस्वाहा ॥ ३ ॥ देवेभ्यःस्वाहा ॥
पितृभ्यःस्वधास्तु ॥ भूतेभ्योनमः ॥ मनुष्येभ्योहंता ॥ प्रजापतयेस्वाहा ॥ परमेष्ठि
नेस्वाहा ॥ यथाकूपःशतधारःसहस्रधारोअक्षितः ॥ एवामेअस्तुधान्यंसहस्रधा
रमक्षितं ॥ धनधान्येस्वाहा ॥ येभूताःप्रचरंतिदिवानक्तंबलिमिच्छंतोवितुदस्य
प्रेष्याः ॥ तेभ्योबलिंपुष्टिकामोहरामिमयिपुष्टिंपुष्टिपतिर्दधातुस्वाहा ॥ ४ ॥
ओषधिवनस्पतिभ्यःस्वाहांतरिक्षायस्वाहानमोरुद्रायपशुपतयेस्वाहाप्रेष्या
एकंच ॥ ७१ ॥ ओंतद्ब्रह्म ॥ ओंतद्वायुः ॥ ओंतदात्मा ॥ ओंतत्सत्यं ॥ ओंतत्सर्वं ॥

अर० २६ ।।१३६।। श्री नै ४

ॐ तत्सुरोर्नमः ।। अंतश्चरति भूतेषु गुहायां विश्वमूर्तिषु ।। त्वं यज्ञस्त्वं वषट्कारस्त्व
मिंद्रस्त्वं रुद्रस्त्वं विष्णुस्त्वं ब्रह्मत्वं प्रजापतिः ।। त्वं तदाप आपो ज्योती रसोमृतं ब्रह्म
भूर्भुवःस्वरों ।। ७२ ।। श्रद्धायां प्राणे निविष्टोमृतं जुहोमि ।। श्रद्धायामपाने निविष्टोमृ
तं जुहोमि ।। श्रद्धायां व्याने निविष्टोमृतं जुहोमि ।। श्रद्धायामुदाने निविष्टोमृतं जु
होमि ।। श्रद्धायां समाने निविष्टोमृतं जुहोमि ।। ब्रह्मणि म आत्मामृतत्वाय ।।
अमृतोपस्तरणमसि ।। श्रद्धायां प्राणे निविष्टोमृतं जुहोमि ।। शिवो मा विशा
प्रदाहाय ।। प्राणाय स्वाहा ।। श्रद्धायामपाने निविष्टोमृतं जुहोमि ।। शिवो मा
विशाप्रदाहाय ।। अपानाय स्वाहा ।। श्रद्धायां व्याने निविष्टोमृतं जुहोमि ।। शिवो मा
विशाप्रदाहाय ।। व्यानाय स्वाहा ।। श्रद्धायामुदाने निविष्टोमृतं जुहोमि ।। शिवो मा
विशाप्रदाहाय ।। उदानाय स्वाहा ।। श्रद्धायां समाने निविष्टोमृतं जुहोमि ।। शिवो मा

यो

राम ।।१३।।

विशामंदाहाय॥समानायस्वाहा॥ब्रह्मणिम आत्मामृतत्वाय॥अमृतापिधानमसि॥
॥७३॥श्रद्धायांप्राणेनिविश्यामृतं हुतं॥प्राणमन्नेनाप्यायस्व॥श्रद्धायामपानेनि
विश्यामृतं हुतं॥अपानमन्नेनाप्यायस्व॥श्रद्धायांव्यानेनिविश्यामृतं हुतं॥व्यान
मन्नेनाप्यायस्व॥श्रद्धायामुदानेनिविश्यामृतं हुतं॥उदानमन्नेनाप्यायस्व॥श्रद्धायां
समानेनिविश्यामृतं हुतं॥समानमन्नेनाप्यायस्व॥७४॥अंगुष्ठमात्रः पुरुषोंचस गुष्ठं
माश्रितः॥ईशः सर्वस्य जगतः प्रभुःप्रीणाति विश्वभुक्॥७५॥वाङ्म आसन्॥नसोः
प्राणः॥अक्ष्योश्चक्षुः॥कर्णयोःश्रोत्रं॥बाह्वोर्बलं॥ऊरुवोरोजः॥अरिष्टाविश्वान्यंगा
नितनूः॥तनुवामेसहनमस्तेअस्तुमामाहिंसीः॥७६॥वयः सुपर्णाउपसेदुरिंद्रंप्रि
यमेधाऋषयोनाधमानाः॥अपध्वांतमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धा गर २
न्॥७७॥प्राणानां ग्रंथिरसिरुद्रोमाविशांतकः॥तेनान्नेनाप्यायस्व॥७८॥नमोरु

अ० २ ॥१३६॥

त्राय विष्णवे मृत्योर्मे पाहि ॥७१॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥८॥ शिवेन मे संतिष्ठस्व स्योने
नेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनु संतिष्ठ
स्वोप ते यज्ञ नम उप ते नम उप ते नमः ॥७८॥८१॥ सत्यं परं परं सत्यं सत्येन न सुवर्गा
ल्लोकाच्च्यवंते कदाचन सतां हि सत्यं तस्मात्सत्ये रमंते तप इति तपो नानशनात्परं यद्धि
परं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमंते दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे
रमंते शम इत्यरण्ये मुनयस्तस्माच्छमे रमंते दानमिति सर्वाणि भूतानि प्रशंसंति दाना
न्नातिदुश्चरं तस्माद्दाने रमंते धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुष्करं त
स्माद्धर्मे रमंते प्रजन इति भूयांसस्तस्माद्भूयिष्ठाः प्रजायंते तस्माद्भूयिष्ठाः प्रजनने रम
तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमंते यज्ञ

शमु मि २ ॥१३७॥

इति यज्ञो हि देवास्तस्माद्यज्ञे रमंते मानसमिति विद्वांसस्तस्माद्विद्वांस एव मानसे रमं
ते न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि परांसि न्यास एवा
त्यरेचयद्य एवं वेदेत्युपनिषत् ॥ ७ ॥ ६२ ॥ ८२ ॥ प्राजापत्यो हारुणिः सुपर्णेयः प्रजापतिं पि
तरमुपससार किं भगवंतः परमं वदंतीति तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादि
त्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदंति तपसा देवा
देवतामग्र आयन्तपसर्षयः सुवरन्वविंदन्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं
प्रतिष्ठितं तस्मात्तपः परमं वदंति दमेन दांताः किल्बिषमवधून्वंति दमेन ब्रह्मचारिणः
सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदंति शमेन शांताः
शिवमाचरंति शमेन नाकं मुनयोन्वविंदञ्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं त
स्माच्छमः परमं वदंति दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवंति
दानेनारातीरपानुदंत दानेन द्विषंतो मित्रा भवंति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदं

मं ५

अर०
२८
॥१३७॥

तिधर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे
सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं त
न्वानः पितॄणामनृणो भवति तदेव तस्या अनृणं तस्मात्प्रजननं परमं वदन्त्यग्नयो
वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी रथन्तरमन्वाहार्यपचनं यजुर
न्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन्परमं वदन्त्यग्नि
होत्रं सायंप्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य ज्यो
तिस्तस्मादग्निहोत्रं परमं वदन्ति यज्ञ इति यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानु
दन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति मानसं प्रा
जापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं
प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः क
तमः स्वयंभुः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स प

९

लोकस्य

वै

रामु
२८
॥१३७॥

रमेष्ठीब्रह्मात्मायाभिरादित्यस्तपतिरश्मिभिस्ताभिःपर्जन्योवर्षतिपर्जन्येनौषधिवन
स्पतयःप्रजायंतओषधिवनस्पतिभिरन्नंभवत्यन्नेनप्राणाःप्राणै
र्बलंबलेनतपस्तपसाश्रद्धाश्रद्धयामेधामेधयामनीषामनीषयामनोम
नसाशांतिःशांत्याचित्तंचित्तेनस्मृतिःस्मृत्यास्मारंस्मारेणविज्ञानंविज्ञा
नेनात्मानंवेदयतितस्मादन्नंददन्त्सर्वाण्येतानिददात्यन्नात्प्राणाभवंति
भूतानांप्राणैर्मनोमनसश्चविज्ञानंविज्ञानादानंदोब्रह्मयोनिःसवाएषपु
रुषःपंचधापंचात्मायेनसर्वमिदंप्रोतंपृथिवीचांतरिक्षंचद्यौश्चदिशश्चा
वांतरदिशाश्चसवैसर्वमिदंजगत्ससभूतंसभव्यंजिज्ञासक्लृप्तऋतजा
रयिष्ठाःश्रद्धासत्योमहस्वान्तपसोवरिष्ठाज्ञात्वातमेवंमनसाहृदाचभू
योनमृत्युमुपयाहिविद्वान्तस्मान्न्यासमेषांतपसामतिरिक्तमाहुर्वसुर

न॰२॰ २९ ॥१३९

ण्वो ऽभिभूरसि प्राणे त्वमसि संधाता ब्रह्मन्त्वमसि विश्वधृत्तेजोदास्त्वमस्य
ग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चंद्रमस उपयामगृहीतो ऽसि ब्रह्म
णे त्वा महस ओमित्यात्मानं युंजीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्म
णो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥८०॥८३॥ त
स्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लो
मानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपो ऽग्निर्दमः शम
यिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्या
वद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते
तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो
या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रा

राम २९ ॥१३९॥

तर्मुध्यंदिनꣳसायंतानिसवनानियेअहोरात्रेतेदर्शपूर्णमासौयेर्धमासा
श्चमासाश्चतेचातुर्मास्यानियऋतवस्तेपशुबंधायेसंवत्सरास्तेहर्गणाः
सर्ववेदसंवाएतत्सत्रंयन्मरणंतदवभृथएतद्वैजरामर्यमग्निहोत्रꣳस
त्रंयएवंविद्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसा
युज्यंगच्छत्यथयोदक्षिणेप्रमीयतेपितॄणामेवमहिमानंगत्वाचंद्रमसः
सायुज्यꣳसलोकतामाप्नोत्येतौवैसूर्याचंद्रमसोर्महिमानौब्राह्मणो
विद्वानभिजयतितस्माद्ब्रह्मणोमहिमानमाप्नोतितस्माद्ब्रह्मणोमहिमा
नमाप्नोति॥८३॥८४॥अंभस्येकपंचाशच्छतंजातवेदसेचतुर्दशभूरन्नंभू
रग्नयेभूरग्नयेचेकमेकंपाहिपाहिचत्वारिचत्वारियश्छंदसांहूनमोब्रह्मे
णऋतंतपोयथावृक्षस्यैकमेकपर्णोरणीयाꣳश्चतुस्त्रिꣳशत्सहस्रशीर्षꣳ

षड्विंशतिरादित्यो वा एष आदित्यो वै तेज एकमेकं निधनपतये त्रयोविंशतिः सु
द्योजातं। त्रीणि वामदेवायैकमघोरेभ्यस्तत्पुरुषाय द्वे ईशानो नमो हिरण्य
बाहव एकमेकं मृतं सत्यं द्वे सर्वो वै रुद्र श्चत्वारि कद्रुद्राय। त्रीणि यस्य वैकं
कतीलकणुघ्नपाजोरि तिरापो वा इदं सर्वमेकमेमापः पुनन्तु त्वा चेर्यग्निश्चसू कु
र्यश्च नवं नवो भिति चत्वार्या योतु पंचो जो सिदशोत्तमे चत्वारि घृणिस्त्रीणि
ब्रह्मये[illegible]यास्ते ब्रह्महत्यां द्वादेश ब्रह्महत्यया यानिरु मंभ्रूणहत्यां ब्रह्म
मुध[illegible]त्ता देवानामिदं वीरहत्यामेकान्नविंशतिरेकान्न। विंशतिर्मेधा
देवी मेधां मइ इश्चत्वारि चत्वार्यामो मेधा द्वे मयि मेधामेकम पैतु परं त्वा ते प्राण
ममुत्रभूयो द्वाविंशक्ते मांछिदो मृत्यो मानो महान्तं मानस्तोके प्रजापते स्व
स्ति दाश्चैव एकं ये ते सहस्रं द्वे द्वे मृत्यवे स्वाहा एकं देवकृतस्यैकोदशाय द्वौ देवाः

भर०
३१
॥१४०॥

कामोकार्षीन्मन्युकार्षीदं इति तिलाञ्जुहोमि गावः श्रियंप्रजाः पंचतिलाः कृष्णा
श्चोरुस्य श्रीः प्रज्ञातुजातवेदः सप्तप्राणाया ... रउतिष्ठपुरुषपंचपृथिवीश
ब्दमनो... मातरात्मापरमात्मा मे क्षुधेन्नमयपंचदशाग्नयेस्वाहे केच त्वाशिरं
शदेत... यं श्रद्धायां प्राणे निविष्टो मृतं जुहोमि चतुर्विंशतिः श्रुत्यायां प्रा
णेनिविश्यामृतं हुतं दशांगुष्ठमात्रो देवा अग्ने आसन्नष्टोवयं सुपर्णाः प्राणा
नांग्रथिरसि देहेनमोहुह्यायेकं त्वमग्ने त्रिशुभिर्द्र शिवेनेमं संतिष्ठस्व सत्यंप्रोजा
पत्यस्तस्यो वमेकेमेकं चतुरशीतिः ॥८४॥ ॐ ॥ सहनाववतु ॥ सहनौभुनक्तु ॥
सहवीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ओं शांतिः शां
तिः शांतिः ॥ ॐ ॥ तत्सत् ॥ शके १७७२ चैत्र शु ॥ ७ सौम्यवासरे दिने पुस्तकं समाप्तं ॥

राम
३१
॥१४०॥

शके १७७२ ॥ दुर्मतिनामसंवत्सरे उदगयने वसंतऋतौ चैत्र वद्य १० ॥
रविवारते दिवशी समाप्तं ॥ इदं पुस्तकं बाळंभट्ट शाउपनाम गोखले ॥